| | रु०आ० | आ०पै० |
|---|---|---|
| १३. तैत्तिरीयोपनिषद्भाष्यवार्तिकं सुरेश्वराचार्यकृतं सटीकमानन्दाश्रमस्थपण्डितैः संशोधितम् ... ... ... ... ... ... ... ... ... ... ... | २ २ | २ ६ |
| १४. छान्दोग्योपनिषत्सटीकशांकरभाष्योपेता, 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधिता ... ... ... ... ... ... ... | ५ ० | ४ ६ |
| १५. बृहदारण्यकोपनिषत्सटीकशांकरभाष्योपेता, 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधिता ... ... ... ... ... ... ... | ८ ० | ७ ० |
| १६-१. बृहदारण्यकोपनिषद्भाष्यवार्तिकमानन्दगिरिकृतटीकासमेतम् । एतत्पुस्तकम् 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधितम् । तत्र केवलसंबन्धवार्तिकरूपः प्रथमो भागस्तस्य मूल्यम् ... ... ... ... | ३ ४ | ३ ६ |
| १६-२. बृहदारण्यकोपनिषद्भाष्यवार्तिकमानन्दगिरिकृतटीकासमेतम् । अस्य प्रथमद्वितीयाध्यायद्वयरूपो द्वितीयो विभागस्तस्य मूल्यम् ... ... ... ... | ८ ८ | ७ ६ |
| १६-३. बृहदारण्यकोपनिषद्भाष्यवार्तिकमानन्दगिरिकृतटीकासमेतम् । अस्य तृतीयाध्यायादिषष्ठाध्यायान्तस्तृतीयो भागस्तस्य मूल्यम् ... ... ... ... | १० १२ | ८ ६ |
| १७. कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषत्सभाष्या तथा च शंकरानन्दकृता श्वेताश्वतरोपनिषद्दीपिका, नारायणकृता श्वेताश्वतरोपनिषद्दीपिका, विज्ञानभगवत्कृतं श्वेताश्वतरोपनिषद्विवरणम्, एतत्पुस्तकचतुष्टयमानन्दाश्रमस्थपण्डितैः संशोधितम्... | २ ४ | २ ६ |
| १८. सौरपुराणं, लेले इत्युपाह्वैः वे० शा० रा० काशीनाथशास्त्रिभिः संशोधितम् | ३ ० | २ ६ |
| १९. रसरत्नसमुच्चयः, वैराजक्षेत्रनिवासिभिः रा० रा० बापटोपाह्वैः कृष्णराव इत्येतैः संशोधितः ... ... ... ... ... ... ... ... ... ... ... | ३ १२ | ३ ६ |
| २०. श्रीमद्विद्यारण्यकृतो जीवन्मुक्तिविवेकः वे० शा० रा० पणशीकरोपाह्वैर्वासुदेवशास्त्रिभिः संशोधितः ... ... ... ... ... ... ... ... ... | १ ३ | २ ६ |
| २१-१. श्रीमद्द्वैपायनप्रणीतब्रह्मसूत्राण्यानन्दगिरिकृतटीकासंवलितशांकरशारीरकभाष्यसमेतानि । तानि च वे० शा० सं० रा० येकसंबेकरोपाह्वैर्नारायणशास्त्रिभिः संशोधितानि । तत्र प्रथमोऽध्यायः, द्वितीयाध्यायस्य पादद्वयं च, इत्येतद्द्वयं प्रथमो भागस्तस्य मूल्यम् ... ... ... ... ... ... ... ... ... | ६ ० | ५ ० |
| २१-२. श्रीमद्द्वैपायनप्रणीतब्रह्मसूत्राण्यानन्दगिरिकृतटीकासंवलितशांकरशारीरकभाष्योपेतानि । तेषां च द्वितीयाध्यायान्तिमपादद्वयसमेततृतीयाध्यायचतुर्थाध्यायरूपो द्वितीयो भागस्तस्य मूल्यम् ... ... ... ... ... ... | ६ ० | ५ ० |
| २२. विद्यारण्यकृतः श्रीशंकरदिग्विजयो धनपतिसूरिकृतडिण्डिमाख्यटीकयाऽद्वैतराज्यलक्ष्मीटीकान्तर्गतविशेषविभागटिप्पण्या च समेत आनन्दाश्रमस्थपण्डितैः संशोधितः ... ... ... ... ... ... ... ... ... ... ... | ६ ० | ५ ० |
| २३. भारतीतीर्थमुनिप्रणीतो वैयासिकन्यायमालाविस्तरः, जयपुरमहाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा० दाधीचपण्डितशिवदत्तेन संशोधितः ... | १ १२ | १ ६ |
| २४. श्रीमन्माधवप्रणीतो जैमिनीयन्यायमालाविस्तरः, जयपुरमहाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा० दाधीचपण्डितशिवदत्तेन संशोधितः ... ... | ८ ० | ७ ० |
| २५-१. स्कन्दपुराणान्तर्गता सूतसंहिता श्रीमाधवाचार्यकृतटीकोपेता वे० शा० | | |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३०

# नृसिंहपूर्वोत्तरतापनीयोपनिषत् ।

श्रीमच्छंकराचार्यविरचितपूर्वतापनीयभाष्यविद्यारण्यप्रणीतोत्तरतापनीयदीपिकाभ्यां समेता ।

एतत्पुस्तकमानन्दाश्रमस्थपण्डितैः सपाठान्तरनिर्देशं संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८१७

खिस्ताब्दाः १८९५

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः )

मूल्यं रूपको द्वादशाऽऽणकाश्च ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्या नृसिंहतापनीयोपनिषदः पुस्तकानि यैः परहितैकपरायणतया प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते ।

क. इति संज्ञितम्—मूलम्, विंचूरग्रामनिवासिनां श्री. रा. रा. अण्णासाहेब इत्येतेषाम् ।

ख. इति संज्ञितम्—पूर्वतापनीमूलमाद्यखण्डपरिमितम्, आनन्दाश्रमपुस्तकसंग्रहालयस्थम् ।

ग. इति संज्ञितम्—मूलम्, एतदप्यानन्दाश्रमपुस्तकसंग्रहस्थमेव ।

घ. इति संज्ञितम्—मूलम्, सातारानगरनिवासिनां वे. शा. रा. रा. अनन्ताचार्य गजेन्द्रगडकर इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलम्, पुण्यपत्तनस्थानां वे. रा. लक्ष्मण नारायण साठे इत्येतेषाम् ।

च. इति संज्ञितम्—मूलम्, रा. रा. हरि बाबाजी करंबेळकर इत्येतेषाम् ।

छ. इति संज्ञितम्—मूलम्, श्री. रा. रा. अण्णासाहेब विंचुरकर इत्येतेषाम् ।

ज. इति संज्ञितम्—केवलश्रीमच्छंकराचार्यविरचितपूर्वतापनीयोपनिषद्भाष्यस्यैव, श्री. रा. रा. अण्णासाहेब विंचुरकर इत्येतेषाम् ।

झ. इति संज्ञितम्—केवलशंकराचार्यविरचितभाष्यस्यैव, श्री. रा. रा. कृष्णराव भीमाशंकर इत्येतेषाम् ।

ञ. इति संज्ञितम्—केवलविद्यारण्यप्रणीतोत्तरतापनीयोपनिषद्दीपिकाया एव, श्री. रा. रा. अण्णासाहेब विंचुरकर इत्येतेषाम् ।

ट. इति संज्ञितम्—केवलविद्यारण्यप्रणीतोत्तरतापनीयोपनिषद्दीपिकाया एव, श्री. रा. रा. कृष्णराव भीमाशंकर इत्येतेषाम् ।

ठ. इति संज्ञितम्—एतदपि केवलविद्यारण्यप्रणीतोत्तरतापनीयोपनिषद्दीपिकाया एव, श्री. रा. रा. कृष्णराव भीमाशंकर इत्येतेषाम् ।

समाप्तिमगमदिदं नृसिंहपूर्वोत्तरतापनीयोपनिषत्सूचीपत्रकम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

# नृसिंहपूर्वतापनीयोपनिषत् ।

श्रीमच्छंकराचार्यविरचितभाष्यसमेता ।

ॐ नमो भगवते लक्ष्मीनृसिंहाय ।

यस्मान्नोपनिषत्ख्याता तपनं तं विधुं गुरुम् ॥
प्रणम्योपासनागर्भां तद्व्याख्यां श्रद्धयाऽऽरभे ॥ १ ॥
आनुष्टुभात्सामराजान्नारसिंहादिदं जगत् ॥
जातं यस्मिन्स्थितं लीनं नमस्तस्मै त्रिशक्तये ॥ २ ॥

भद्रं कर्णेभिः शृणुयाम देवा इतिमन्त्रान्तर्गतभद्रपदव्याख्यानपरामृचमुदितां शान्तौ पठन्नन्याभ्यः श्रौतस्मार्तपौराणिककल्पप्रतिपादिताभ्यः साकारब्रह्मविद्याभ्य इयं सुभद्रेति दर्शयति—

**ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ १ ॥**

भद्रं कल्याणम् । कर्णेभिरिति च्छान्दसम् । कर्णैः शृणुयाम शृणुम देवाः सन्तो वयं भद्रं कल्याणं पश्येम । अक्षभिश्चक्षुर्भिर्यजत्रा यजनशीलाः । स्थिरैरङ्गैर्हृदयाद्यैः सामाङ्गप्रणवसावित्रीयजुर्लक्ष्मीनृसिंहगायत्रीरूपैर्मूलमन्त्राङ्गव्याख्यानपरैस्तनूभिस्तनूमन्त्रैः “यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः” इत्याद्यैः । तुष्टुवांस इति स्तुतिसाधनत्वेनोक्तत्वात्तनूशब्देन मन्त्रा गृह्यन्ते । तथाऽङ्गशब्देन च तुष्टुवांसः स्तुवानाः स्तुतिं कुर्वाणाः । व्यशेम विगतरोगं विविधैहिकामुष्मिकसुखभोगक्षममशेम प्राप्नुयाम । आयुरिति प्रत्येकं संबध्यते । यद्देवहितं देवस्तापनीय उक्तविद्ययोपास्यस्तत्तदवसरोचितकरणबुद्ध्या शिक्षन्हितमाचरति यस्मिन्नायुषि तत्तथोक्तमायुर्व्यशेमेति संबन्धः ॥ १ ॥

---

१ ह. विधं ।

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ २ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

स्वस्ति न इत्यत्र स्वस्तिपदानां चतुर्णामपौनरुक्त्यं यास्कवचनाद्यथासंख्यम् । स्वस्तीत्यविनाशमायुर्नोऽस्मभ्यमिन्द्रो दधातु । कीदृग्वृद्धश्रवा वृद्धाद्बृहस्पतेः सद्विद्याश्रवणं यस्य स तथोक्तो दधातु स्वस्तीत्याभिमुख्यमुपासनायां नोऽस्मभ्यम् । पूषा विश्ववेदा विश्वानि वेदांसि यस्य स तथोक्तः । अथवा सर्वे वेदा उपासनायामाभिमुख्यं दधतु । स्वस्ति नोऽस्मभ्यं पूजार्हतां ताक्ष्यो देवभक्तो गरुत्मानरिष्टनेमिरहिंसितवज्रो दधातु स्वस्ति सुशोभनं नोऽस्मभ्यं दधातु बृहस्पतिरित्यर्थः । अस्मिन्मन्त्रेऽस्मच्छब्दवीप्सया वक्ष्यमाणायां विद्यायामादरं दर्शयति । शान्तिः शान्तिः शान्तिस्त्रिधा तु विघ्नोपशान्तिर्वक्ष्यमाणविद्यानुष्ठाने ॥ २ ॥

॥ इति शान्तिः ॥

---

१ ज. °नितक्षेपा ।

आपो वा इदमासन्नित्याद्या तदेतान्निष्कामस्य [illegible] तापनीयोपनिषच्छ्रीनृसिंहाकारब्रह्मविषया सती निराकारब्रह्मप्रतिपत्त्युपायभूताऽत एव पृथक्संबन्धाभिधेयप्रयोजनानि न वक्तव्यानि यान्येव तूपनिषत्संबन्धाभिधेयप्रयोजनानि तान्येवोपनिषद्व्याचिख्यासुना संक्षेपतो वक्तव्यानि । तत्र प्रयोजनसाधनाभिव्यञ्जकत्वेनाभिधेयसंबन्धशास्त्रं पारम्पर्येण प्रयोजनवत्। किं पुनः प्रयोजनमित्युच्यते । रोगार्तस्येव रोगनिवृत्तौ स्वस्थता दुःखात्मकस्याऽऽत्मनो द्वैतप्रपञ्चस्योपशमे स्वस्थता द्वैताभावः प्रयोजनं द्वैतप्रपञ्चस्य चाविद्याकृतत्वाद्विद्यया तदुपशमः स्यादिति ब्रह्मविद्याप्रकाशनायास्या आरम्भः । यत्र हि द्वैतमिव यत्र चान्यदिव स्यात्तत्रान्योऽन्यत्पश्येद्विजानीयाद्यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्विजानीयादित्यादिश्रुतिभ्योऽस्यार्थस्य सिद्धिः । तत्र तावदस्यामुपनिषदीदं परामृश्यते किं तावद्वेद्यं विद्याभेद आहोस्विदन्योन्यविशेषणविशेष्यभावाद्विशिष्टस्य च वेद्यस्यैक्याद्विद्यैक्यमिति । तत्र किं नः प्रतिभाति विद्याभेद इति । तथा हि—प्रथमोपनिषदि लोकसाङ्गसामशुद्धसामप्रयादिसामान्तर्गतस्वरविशेषक्षीरोदार्णवशायिनृकेसरिशंकरसच्चिदानन्दमयानामन्योन्यविशेषणविशेष्यभावरहितानां वेद्यानां श्रवणात्तथा प्रणवानुष्टुप्पदपदार्थशक्तिसामबीजसामाङ्गमन्त्रचतुष्टयानां वेद्यानां द्वितीयतृतीयचतुर्थोपनिषत्सु यथासंख्यं श्रवणात् । अन्त्योपनिषदि महाचक्रविद्या श्रूयते । नन्वन्योन्यविशेषणविशेष्यभावरहितानामप्यङ्गाङ्गिभावो भवतु । नेति ब्रूमः "फलवत्संनिधावफलं तदङ्गम्" इति न्यायवैषम्यात् । तथाहि—लोकादितत्तद्वेद्यानां फलसंबन्धेन 'यो जानीते सोऽमृतत्वं च गच्छति' इत्यसकृच्छ्रवणात् । ननु लोकादीनामन्योन्यविशेषणविशेष्यभावरहितानामपि श्रीनृसिंहाकारब्रह्मणा सह विशेषणविशेष्यभावसंभवात् । तथाहि—"सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतान्युद्गृह्णात्युद्गृह्णते" इत्यादिपदव्याख्याने सर्वेषां वेद्यानां तत्संबन्धश्रवणादतो विशिष्टस्य वेद्यस्यैक्याद्विद्यैक्यमिति । अत्रोच्यते । सत्यं श्रूयते संबन्धः । तथाऽप्यर्थवादत्वान्न विवक्ष्यतेऽर्थवादश्च विध्यश्रवणात् । उद्गृह्णाति विरमति व्याप्नोति ज्वलति पश्यति पलायन्ते ददाति मारयति नमन्तीत्येवंवर्तमानोपदेशाच्च । न च वाच्यमधस्तात्पदोद्धारे तस्य ह वा उग्रं प्रथमं स्थानं जानीयादिति विधिः श्रूयत इति । यतस्तत्र प्रागपि प्रत्यक्षरमुभयत ओंकारो भवतीति विधिबलात्प्रणवाक्षरविप्रयोगेन मूलमन्त्राक्षरव्यत्ययाच्चतत्पदाज्ञाने प्राप्ते तत्तत्पदपरिमाणज्ञापनार्थं विधिवाक्यशेषिणः सन्न तत्पदार्थानां श्रीनृसिंहब्रह्मणा सह संबन्धं विधातुं शक्नोति । अतो यावद्वेद्यं विद्याभेद इत्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः । सत्यं पृथिव्यादिलोकानां परस्परं विशेषणविशेष्यभावो

नावगम्यते प्रत्युत प्रत्येकं च वेद्यता श्रूयते जानीयादिति। तथाऽपि श्रीनृसिंहब्रह्मणा सह संबन्धस्तत्र तत्र श्रूयमाणः केन वारायितुं शक्यते। तथाहि। य एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रायच्छद्य एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयादित्यादिमध्ये पुनश्चाऽऽनुष्टुभस्य मन्त्रराजस्य नारसिंहस्याङ्गमन्त्रान्नो ब्रूहीति मन्त्रराजं नारसिंहमानुष्टुभं भवतीत्येवं मध्ये श्रावयित्वाऽन्ते य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीत इत्यसकृदभ्यस्याऽऽदिमध्यावसानेषु नृसिंहब्रह्मसंबन्धित्वेन संकीर्तनाद्विद्याया ऐक्यमिति विनिश्चिते तत्संबन्धित्वेन यथायोग्यतया तदन्तर्गतं पदजातं सामसंबन्धि समस्तं यथायोग्यतया वर्णनीयम्। अपि चान्त्योपनिषदि फलकथनावसरे कृत्स्नां श्रीनृसिंहब्रह्मविद्यामभिधाय य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीत इत्येतन्नारसिंहानुष्टुभशब्दानां कृत्स्ननृसिंहब्रह्मविद्याभिधायकत्वेन निश्चितानामसकृच्छ्रुतानामेवाऽऽदावेतं मन्त्रराजं नारसिंहमानुष्टुभमपश्यदिति श्रवणात्तदन्तरालवर्तिपदजातं नृसिंहब्रह्मविद्यासंबद्धमिति निश्चीयते। तत्संबन्धश्च तत्तत्पदव्याख्यानावसरे स्पष्टमेव प्रदर्शयिष्यते। अपि च "वाक्यान्वयात्" इति न्यायेन सर्वमेवेदं प्रकरणं नृसिंहब्रह्मविद्याप्रकरणमिति गम्यते। अथ यदुक्तं पदव्याख्यानवाक्यानां नृसिंहब्रह्मविद्यासंबन्धसमर्पकाणां विध्यश्रवणाद्वर्तमानापदेशाच्चार्थवादत्वमिति तदयुक्तम्। अधस्तात्पदोद्धारे तस्य ह वा उग्रं प्रथमं स्थानं जानीयादिति विधिः स्पष्ट एव श्रूयते। तत्र च विधौ तच्छब्देन साङ्गस्य मूलमन्त्रस्य परामर्शादङ्गानां च द्वैविध्यान्मूलमन्त्राङ्गमन्त्राणां सामाङ्गमन्त्राणां च यथायोग्यतया व्याख्यानव्याख्येयभावेनावस्थितत्वात्कृत्स्नैव नृसिंहब्रह्मविद्याऽवगम्यते। स च विधिरनुषङ्गन्यायेन सर्वपदसंबन्धः स्पष्ट इति। ननु तत्राप्युक्तं पदज्ञानार्थं तदिति तन्न। प्राक्प्रत्यक्षरमुभयत ओंकारो भवतीति वाक्यादर्थाज्ञानेन पदाज्ञाने प्राप्ते तत्पुरःसरमेव पदज्ञानमिति। नन्वेवं तच्छेषत्वेनोपरिष्टादर्थकथनमनुपपन्नम्। नानुपपन्नम्। उपरिष्टाद्धि कस्मादुच्यते कस्मादुच्यत इत्यर्थपुरःसरमेव पदं स्पष्टार्थमुपसंहराति तस्मादिदमुच्यत इत्यतोऽवगम्यते प्रागप्यर्थज्ञानपुरःसरमेव पदज्ञानमिति। अतः सर्वसंबन्धिविधिश्रवणं स्पष्टमिति। किंच सर्वेषां पदानामर्थमाश्राव्यान्ते य एवं वेदेति विधिश्रवणात्। वेदेति वर्तमानत्वात्कथं विधिरिति चेन्न "वचनानि त्वपूर्वत्वात्" [पू० मी० सू० १०-४-२२] इति न्यायात्। य एवं वेदेति य एवं प्राक्तनमर्थजातं श्रीनृसिंहब्रह्मसंबद्धं वेदोपास्ते। उपनिषदि साकारब्रह्मविद्याप्रकरणे पठितानां वेदोपासनाज्ञानध्यानपदानामुपासनार्थत्वेन निर्णीतत्वात्। अतो नायमर्थवाद इत्यतः पञ्चसूपनिषत्सु न यावद्द्वैयं विद्याभेद इति

आपो वा इदमासन्सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत्तस्यान्तर्मनसि कामः समवर्तेतेदं सृजेयमिति तस्माद्यत्पुरुषो मनसाऽभिगच्छति तद्वाचा वदति तत्कर्मणा करोति तदेषाऽभ्युक्ता—कामस्तदग्रे समवर्तताधि मनसो रेतः

सिद्धम् । आपो वा इदमासन्नित्यादिना श्रीनृसिंहब्रह्मविद्याप्रकरणमाख्यायिकापूर्वमवतारयन्तीयमुपनिषत् । तत्र तावत्प्रथमोपनिषदि सामसंबन्धित्वेन पृथिव्यन्तरिक्षद्युब्रह्मवेदसाङ्गसामाग्निसूर्यचन्द्रब्रह्मादिदेवानां सामोद्धारपूर्वकं क्षीरोदार्णवशायिन्युपविष्टे वा शेषाभोगमस्तकपरिवृते नृकेसरिणि योगारूढे वरदाभयहस्ते त्रिनेत्रे शंकरे पिनाकहस्ते सच्चिदानन्दमये ब्रह्मविवर्त उपासनम् । तस्मिन्नेव द्वितीयोपनिषदि प्रणवोपासनापूर्वकसामरहितानुष्टुम्मन्त्रपञ्चाङ्गपदोद्धारपूर्वकपदव्याख्याकथनगुणविशिष्टोपासनम् । तस्मिन्नेव तृतीयोपनिषदि सामान्वितत्वेन मूलमन्त्रसंबन्धित्वेन शक्तिबीजकथनं तन्निर्णयश्च । तस्मिन्नेव चतुर्थोपनिषदि मूलमन्त्राङ्गमन्त्रसामाङ्गमन्त्रैः प्रणवेन हृदयं सावित्रेण शिरो महालक्ष्मीशिखां व्याख्याय नृसिंहगायत्र्या कवचं व्याचष्टे । महाचक्रद्वात्रिंशद्व्यूहदेवतोद्देशपूर्वकं पुरश्चरणमन्त्राश्च । पञ्चमोपनिषदि मन्त्रवर्णे द्वात्रिंशद्व्यूहान्महाचक्रे विन्यस्य तत्स्वरूपप्रकथनेनास्त्रमन्त्रान्व्याख्याय श्रीनारसिंहब्रह्मविद्यानुष्ठातुः फलं व्याचष्टे । आप आसन्निति संबन्धः । वै प्रसिद्धमिदं प्रत्यक्षादिदृष्टं सलिलमम्ब्वेव स प्रजापतिः । स इति पूर्वपरामर्शिना तच्छब्देन पुंलिङ्गेन प्रकृतं परामृशति "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः । ब्रह्मा प्रजापतिरेकः सन्पुष्करपर्णे समभवदासीत् । तस्य प्रजापतेर्मनस्यन्तःकरणेऽन्तर्वर्ती काम इच्छा समवर्तत । इदं सृजेयमिति सृष्टिविषय इत्यर्थः । तस्माद्यत्पुरुषो मनसाऽभिगच्छत्यन्तःकरणेनेच्छति तद्वाचा वदति । वाग्वदनपूर्वकं कर्मकरणं लोकप्रसिद्धं दर्शयति—तत्कर्मणा करोतीति । उक्तमेवार्थं द्रढयितुमृचं साक्षित्वेनोद्भावयति—तदेषाऽभ्युक्तेति । अर्थदार्ढ्यं ऋङ्निर्णीतेव । सामयजुषोरर्थशैथिल्यमपि संभाव्यते "यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढम्" इति श्रुतेः । तस्मिन्नेवार्थे एषा, ऋग्वक्ष्यमाणाऽभ्युक्ता । मनसः कामस्तदग्रे समवर्तत रेत उदकं प्रथममादौ सृष्ट्यवसरे

१ ख. ग. °पो ह वा । २ छ. °न्तरमन° ।

प्रथमं यदासीत् । सतो बन्धमसति निर-
विन्दन्हृदि प्रतीष्या(ष्य) कवयो मनीषेत्युपैनं
तदुपनमति यत्कामो भवति स तपोऽतप्यत
स तपस्तप्त्वा स एतं मन्त्रराजं नारसिं-
हमानुष्टुभमपश्यत्तेन वै सर्वमिदमसृजत यदिदं

यदासीद्यस्मात्कारणादासीत् । अथवा कालनिर्देशो यदेति यस्मिन्काले प्रथममुदकमासीत्तदैव मनसः कामोऽधीत्युपरि विषये सृष्टिविषये समवर्ततेत्यर्थः । सतो ब्रह्मणो बन्धुं बन्धनं विवर्तं कवयो विपश्चितो हृदि निरविन्दन् । असति ब्रह्मणि । असच्छब्दस्य नामरूपाव्याकृतत्वेन ब्रह्मणि प्रयुक्तत्वात् "असद्वा इदमग्र आसीत्" इत्यादौ । हृद्यन्तःकरणे प्रतीष्य प्रत्यगात्मानमवेक्ष्य मनीषा मनीषया विपश्चिद्बुद्ध्या । ब्रह्मणो बन्धुं बन्धुमिव बन्धुं परं ब्रह्म व्याकर्तारं क्षीरोदार्णवादिविशेषणविशिष्टं भाविसृष्टेः स्रष्टारं मूलमन्त्रसामाद्युपास्यं हृदि निरविन्दन्नित्युत्तरार्धस्य गूढोऽभिप्रायः । इतिशब्द ऋक्समाप्तिं द्योतयति । उपैनं कामिनं तत्काम्यमुपनमति यस्मिन्कामो भवति । स प्रजापतिः । तपः "मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः" इति स्मरणादतप्यत मनसश्चेन्द्रियाणां चैकाग्र्यमकरोत् । स प्रजापतिः । तपस्तप्त्वा । पूर्वं व्याख्यातम् । स प्रजापतिरेतं प्रकृतं सर्वनाम्नोपात्तं सतो बन्धुमित्यनेन गूढाभिप्रायेण सूचितं "ज्योतिश्चरणाभिधानात्" [ ब्र० सू० १–१–२४ ] इति न्यायेन मन्त्रराजं प्राकरणिकमन्त्राणां राजानं प्रधानभूतं सामराजं वा । मन्त्रशब्दस्याहिर्बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयिविदो विदुः । ऋचः सामानि यजूंषीत्यादौ साम्न्यपि प्रयुक्तत्वात् । नारसिंहं नृसिंहसंबन्धिसामादि । तद्धितात् । नृसिंहगायत्र्यादिप्राप्तौ तद्व्यावृत्त्यर्थमानुष्टुभमित्यनुष्टुप्छन्द उपाधिकमृग्विशेषमाह "गायत्रमेतदहर्भवति" इति न्यायात् । अपश्यद्दृष्टवानित्यभिप्रायः । एतदुक्तं भवति—द्वितीयतृतीयचतुर्थपञ्चमोपनिषत्सु मन्त्रराजादित्रयः शब्दाः प्रयुक्तास्तत्पुरुषबहुव्रीहितद्धितसामर्थ्यात्पूर्वपूर्वोपनिषदर्थमाचक्षाणाः सन्त एवाऽऽदौ प्रयुक्ताः कृत्स्नामेव ब्रह्मविद्यां संगृहीतवन्तोऽतश्च वक्ष्यमाणां कृत्स्नामेव ब्रह्मविद्यामपश्यदित्यर्थः । तेन वै प्रागुक्तेन वै प्रसिद्धम् । सर्वमिदमसृजत प्रत्यक्षादिसिद्धमसृजत । यदिदं किंच स्पष्टम् । तस्मात्सर्वमिदमानुष्टुभमित्याचक्षते यदिदं

१ च. न स ।

किंच तस्मात्सर्वमिदमानुष्टुभमित्याचक्षते यदिदं किंचानुष्टुभो वा इमानि भूतानि जायन्तेऽनुष्टुभा जातानि जीवन्त्यनुष्टुभं प्रयन्त्यभिसंविशन्ति तस्यैषा भवत्यनुष्टुप्प्रथमा भवत्यनुष्टुबुत्तमा भवति वाग्वा अनुष्टुब्वाचैव प्रयन्ति वाचैवोद्यन्ति परमा वा एषा छन्दसां यदनुष्टुबिति ॥ १ ॥

---

किंच मन्त्रराजनारासिंहशब्दौ । इहाऽऽनुष्टुभमितितद्धितप्रयोगाद्द्वात्रिंशदक्षराणामेव तत्साम्नश्च सामर्थ्यं दर्शयत्येवात्राप्युपाख्यायिकायां किल प्रजापतिस्तपसा लोकत्रयसृष्ट्यर्थमेव कारणजिज्ञासुरत्यन्तशुद्धान्तःकरणत्वाच्छक्तित्रययुक्तां ब्रह्मस्वरूपिणीं भूतसृष्टिपुरःसरसर्वसृष्टिकारणिकामनुष्टुबृचमपश्यदित्याह । अनुष्टुभो वा इमानि भूतानि जायन्तेऽनुष्टुभा जातानि जीवन्त्यनुष्टुभं प्रयन्त्यभिसंविशन्तीति "जन्माद्यस्य यतः" [ ब्र० सू० १–१–२ ] इत्यस्या ब्रह्मलक्षणलक्षितत्वं दर्शयति । उक्तमेवार्थं द्रढयितुमृचं साक्षित्वेनोद्भावयति— तस्य ब्रह्मस्वरूपस्य साक्षिण्येषा वक्ष्यमाणा, ऋग्भवति । अनुष्टुप्प्रथमा भवति सर्वसृष्टेः प्रथमाऽऽद्या भवति । अनुष्टुबुत्तमा श्रेष्ठा भवति वाग्वा अनुष्टुप्सर्वो वाक्प्रपञ्चोऽनुष्टुभि लीन इति दर्शयति । नामसृष्टिपूर्वकत्वाद्रूपसृष्टेर्वाग्रूपत्वादनुष्टुभोऽनुष्टुबेव मूलकारणम् । वाचैव प्रयन्त्यनुष्टुभैव प्रलयं गच्छन्ति भूतानि । वाचैवानुष्टुभैवोद्यन्त्युत्पत्तिं गच्छन्ति । परमा वा एषा छन्दसां गायत्र्यादीनां छन्दसां वेदानां वा परमोत्कृष्टा । परमत्वं च सामाधारत्वादनुष्टुभः । साम्नश्च परमत्वं "देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्येवाश्रयन्त" इति श्रुतेः "वेदानां सामवेदोऽस्मि" इति स्मृतेश्च । यदनुष्टुबितीतिशब्द ऋक्समाप्तिं द्योतयति ॥ १ ॥

एवं तावदाख्यायिकायामन्ते सकलनृसिंहोपासनसंग्राहकान्मन्त्रराजनारसिंहानुष्टुभशब्दान्विज्ञाय तैरेव शब्दैः सकलोपासनां सृष्ट्यर्थं प्रजापत्यनुष्ठितां संगृह्येदानीमविशेषेणानुष्ठाने प्राप्ते तत्र तावत्साम्न ऋगक्षराभिव्यञ्जकत्वादभिव्यञ्जकाभिव्यङ्ग्ययोरभिव्यञ्जकपूर्वकत्वात्साम्नश्च सर्ववेदश्रेष्ठत्वात् "देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्येवाश्रयन्त" इति श्रुतेः "वेदानां सामवेदोऽ-

ससागरां सपर्वतां सप्तद्वीपां वसुंधरां तत्साम्नः प्रथमं पादं जानीयाद्यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षं तत्साम्नो द्वितीयं पादं जानीयाद्वसुरुद्रादित्यैः सर्वैर्देवैः सेवितं दिवं तत्साम्नस्तृतीयं पादं जानीयाद्ब्रह्मस्वरूपं निरञ्जनं परमव्योम्निकं तत्साम्नश्चतुर्थं पादं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छत्यृ-

---

स्मि" इति स्मृतेश्चास्य च सामराजत्वात्तदुपासनायां प्राप्तायां क्रमसूचनपूर्विकामाह—ससागरां सपर्वतां सप्तद्वीपां वसुंधरां तत्साम्नः प्रथमं पादं जानीयादिति। यथाकथंचिदुपासनारूपे प्राप्ते ससागरामिति प्रथमत एव सागरसंकीर्तनेन सागरपूर्विकामुपासनां द्योतयति। अत एव न पृथ्वीविशेषणं सागर इति केचिद्व्याचक्षते। ततश्च प्रथमतः सागरं क्षीरोदार्णवं ध्यात्वा तच्छायिन्युपविष्टे वा तस्मिन्नचाङ्गन्यासमृक्सामयोः कृत्वा तस्मिन्नेव सपर्वतामित्याद्युपासनां सह सागरेण वर्तनं यस्या उपासनायास्तां ससागरां जानीयादित्यनुषङ्गः। यथा (तु) 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यादेरानन्दमयाद्विच्छेदमिवेति तदयुक्तम्। न तावद्विशिष्टामुपासनां ससागरशब्दस्तावदाह किंतु बद्धक्रमके पदार्थजाते तदादिन्यायेन सूचयति। तदन्यविशेषणत्वेनैकवाक्यत्वेऽपि समानम्। तस्माद्बद्धक्रमकमुपासनं प्रथमत एव सागरशब्दोपादानात्क्षीरोदार्णवपूर्वकं विज्ञेयम्। ततश्चायमर्थः। तत्साम्नस्तस्या न्यस्ताया अनुष्टुभो न्यस्तस्य च साम्नः प्रथमं पादं क्षीरोदार्णवशायिन उपविष्टस्य वा नृकेसरिण उक्तविशेषणविशिष्टां वसुंधरां हृदयमङ्गं हृदयान्तर्वर्तित्वेन जानीयादित्यर्थः। एवमुत्तरेष्वपि त्रिषु पादेषु यक्षगन्धर्ववसुरुद्रब्रह्मस्वरूपं लोकसाहचर्याद्ब्रह्मलोकं तत्साम्नस्तस्या न्यस्ताया अनुष्टुभो न्यस्तस्य च साम्नो द्वितीयं तृतीयं चतुर्थं पादं तस्य नृकेसरिणः शिरःशिखाकवचान्तर्वर्तित्वेन जानीयादिति योज्यम्। एवं नृकेसरिणं यो जानीते सोऽमृतत्वं च गच्छतीति गमनोपादानात्कार्यममृतत्वं न कैवल्यं "कार्यं बादरिरस्य गत्युपपत्तेः" [ ब्र० सू० ४-३-७ ] इति न्यायात्। अथवा देहान्ते देवः परं ब्रह्म निर्गुणं ब्रह्म तारकं तारकमात्राभिः प्रत्यग्ब्रह्मणोरेकत्वं

---

१ क. ग. घ. सप्तम°। २ क. ग. °र्णः से°। ३ ज. °न्तरर्वात°।

ग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति किं ध्यानं किं दैवतं कान्यङ्गानि कानि दैवतानि किं छन्दः क ऋषिरिति ॥ २ ॥ स होवाच प्रजापतिः स यो ह वै तत्सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तं तत्साम्नोऽङ्गं वेद

---

व्याचष्ट इत्यन्ते श्रवणादमृतत्वं कैवल्यमेवमुपरिष्टादुभयथाऽस्यामृतत्वं श्रूयमाणं व्याख्येयम् । ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्तीति महाचक्रं व्याख्यातम् । तस्य नाभ्यां क्षीरोदार्णवशायिन उपविष्टस्य वा नृकेसरिणः क्रमप्राप्तं पञ्चममङ्गमस्त्राख्यं वक्ष्यामः । नन्वेवं साङ्गोपासनामपरिसमाप्य कोऽयं मध्ये ध्येयप्रश्नोपक्रमः पिशाचजल्पितमिव किं ध्यानं किं दैवतं कान्यङ्गानि कानि दैवतानि किं छन्दः क ऋषिरिति ध्यानदेवताङ्गाङ्गदेवताछन्दर्षीणां प्रश्नः । अत्रोच्यते । अत्र किलाऽऽख्यायिकायां प्रजापतिर्विरतेभ्यो देवेभ्यः सामद्वारिकामेकामुपासनां परिसमाप्य तूष्णीं बभूव श्रोतॄणां बोधं परीक्षितुं किं प्रागुक्त एवार्थेऽवान्तरविशेषं पृच्छन्त्यन्यदप्यर्थजातं तदुपयोगि न वेति । अनेनाभिप्रायेण मध्य एव प्रश्नोपक्रमस्तत्र षट्प्रश्नान्प्रथमप्रश्ने जानीयादिति प्रागुक्तविधावुपरिष्टाच्चोपनिषत्स्वा समाप्तेर्ज्ञानमात्रं ध्यानं वेति प्रश्नः । जानीयादिति विधावभ्यासस्य ध्यानस्याश्रवणात्तत्रोत्तराप्रदानात् "अप्रतिषिद्धमनुमतं भवति" इति न्यायाज्जानीयादित्यत्र ध्यायेदित्यर्थः । ध्यायतिर्ज्ञानाभ्यासे वर्तते । किं दैवतं किं छन्दः क ऋषिरिति प्रश्नत्रये नारसिंहानुष्टुभतद्धितश्रवणात्स्वस्य च ब्रह्मणः प्रजापतेः कथकत्वेन दैवतच्छन्दर्षित्वेनोत्तरम् "यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवता" इत्याश्वलायनस्मरणात् । इतिशब्दः प्रश्नसमाप्तिं द्योतयति ॥ २ ॥

अत्र किल षट्प्रश्नाः प्रश्नचतुष्टयनैरपेक्ष्येणाङ्गपूर्वत्वादङ्गिज्ञानस्य पारिशेष्याच्च साम्नोऽङ्गं तद्दैवतं प्रश्नद्वयेन स प्रजापतिः श्रोतॄणां बोधमर्थितां चावेक्ष्य हर्षितो निपातानामनेकार्थत्वात् । उत्तरमुवाच—स यो ह वा इति । वीप्सया हर्षनिर्भरतां दर्शयति । सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तं श्रीबीजेनाभिषिक्तमुपरिष्टाच्छ्रीबीजमित्यर्थः । तत्साम्नोऽङ्गं वेदेत्यभिषिक्तमिति वदञ्शिरःपूर्वकत्वादभिषेकस्य तस्मिन्नभिषिक्ते शिरोङ्गस्थाने साम्नोऽङ्गं वेदेत्यङ्गतां

श्रिया हैवाभिषिच्यते सर्वे वेदाः प्रणवा-
दिकास्तं प्रणवं तत्साम्नोऽङ्गं वेद स त्रीँल्लोका-
ञ्जयति चतुर्विंशत्यक्षरा महालक्ष्मीर्यजुस्तत्सा-
म्नोऽङ्गं वेद स आयुर्यशःकीर्तिज्ञानैश्वर्यवान्भ-
वति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते
सोऽमृतत्वं च गच्छति सावित्रीं प्रणवं यजुर्लक्ष्मीं
स्त्रीशूद्राय नेच्छन्ति द्वात्रिंशदक्षरं साम जानी-
याद्यो जानीते सोऽमृतत्वं च गच्छति सावित्रीं
लक्ष्मीं यजुः प्रणवं यदि जानीयात्स्त्रीशूद्रः
स मृतोऽधो गच्छति तस्मात्सर्वदा नाऽऽचष्टे

---

विधत्ते । श्रिया हैवाभिषिच्यत इत्यङ्गेषु सर्वत्र फलश्रवणं "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्" [पू० मी० सू० ४-३-१] इत्यर्थवादः। अनतिधृष्टं स्तृणोति प्रजयैवैनं पशुभिरनतिधृष्टं करोतीति न्यायेन गुणफलाधिकारो वा। सर्वे वेदाः प्रणवादिकास्तं प्रणवमिति सर्वे वेदा उपवेदाश्चाष्टावित्यष्टसंख्यानन्तरं तत्स्थाने हृदयाङ्गस्थाने प्रणवं विदधत्सर्ववेदादिभूतात्प्रणवात्सामाक्षराण्यधिकतराणीति दर्शयति । तत्साम्नोऽङ्गं वेद स त्रीँल्लोकाञ्जयतीत्युक्तार्थम् । चतुर्विंशत्यक्षरा महालक्ष्मीर्यजुस्तस्मिंश्चतुर्विंशत्यक्षरस्थाने सामतृतीयपादादुपरिष्टात्साम्नोऽङ्गं वेदशिखाङ्गस्थान इत्यर्थः। स आयुर्यशो ज्ञातिप्रशंसा वा कीर्तिर्जनप्रशंसा वा ज्ञानैश्वर्यवान्भवतीत्युक्तार्थम् । यस्मादेवं सामाङ्गफलं तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छतीत्युक्तार्थम् । सावित्र्यादिमन्त्राणां हृदयाद्यङ्गस्थाने प्राप्तानामत्राऽऽदावेवाङ्गत्वविधानार्थमपकर्षस्तत्पक्षोपसंहाराभ्यां विद्यैक्ये तात्पर्यं दर्शयति । सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय स्त्री च शूद्रश्च स्त्रीशूद्रं तस्मै स्त्रीशूद्राय नेच्छन्तीति निषेधं कुर्वन्प्रधानोपासनायां स्त्रीशूद्रस्याप्यधिकारं दर्शयति । द्वात्रिंशदक्षरं साम जानीयादिति द्वात्रिंशदक्षराणां सामसंबन्धं विधत्ते । यो जानीत इत्याद्युक्तार्थम् । सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात्स्त्रीशूद्रः स मृतोऽधो नरकं गच्छतीति प्रत्यवायदर्शनेन निषेधमेव द्रढयति । तस्मात्सर्वदा नाऽऽचष्ट इति कदाचिदपि

यद्याचष्टे स आचार्यस्तेनैव मृतोऽधो गच्छति ॥३॥ स होवाच प्रजापतिरग्निर्वै वेदा इदं सर्वं विश्वानि भूतानि प्राणा वा इन्द्रियाणि पशवोऽन्नममृतं सम्राट्स्वराड्विराट्तत्साम्नः प्रथमं पादं जानीयादृग्यजुःसामाथर्वरूपः सूर्योऽन्तरादित्ये हिरण्मयः पुरुषस्तत्साम्नो द्वितीयं पादं जानीयाद्य ओषधीनां प्रभवति तारापतिः सोमस्तत्साम्नस्तृतीयं पादं जानीयात्स ब्रह्मा स शिवः स हरिः स इन्द्रः सोऽग्निः सोऽक्षरः परमः स्वराट्तत्साम्नश्चतुर्थं पादं

नाऽऽचष्ट इत्याचार्यस्य निषेधं दर्शयति । यद्याचष्टे स आचार्यस्तेनैव कथनेन मृतोऽधो गच्छतीति प्रत्यवायदर्शनेन निषेधमेव द्रढयतीति ॥ ३ ॥

एवं सामाङ्गान्युक्त्वा तदुपासनायां च स्त्रीशूद्रव्यतिरिक्तमधिकारिणमुक्त्वाऽन्त्यप्रश्नाङ्गदैवतानि वक्तुं सामदेवतैव तत्तत्स्थाने निपतितस्याङ्गस्य सैव देवतेति स प्रजापतिर्हर्षितोऽन्त्यप्रश्न उत्तरमुवाच—अग्निर्वै वेदा इदं सर्वमित्यादि यो जानीते सोऽमृतत्वं च गच्छतीत्यन्तं च ससागरामित्यादिना योजनीयम् । एतदुक्तं भवति । क्षीरोदार्णवशायिन्युपविष्टे वा न्यस्तस्य साङ्गस्य साम्नः पादश उक्तगुणां पृथ्वीं हृदयान्तर्वर्तित्वेनाग्निर्वै वेदा इदं सर्वं विश्वानि भूतानि प्राणा इन्द्रियाणि पशवोऽन्नममृतं सम्राट्स्वराड्विराट्तत्साम्नः प्रथमपादस्य तदङ्गस्य प्रणवस्य हृदयमन्त्रस्य च दैवतं जानीयादिति पारमेश्वरं हृदयं व्याख्यातम् । तथा यक्षगन्धर्वादिगुणविशिष्टमन्तरिक्षं शिरोन्तर्वर्तित्वेन सर्ववेदमयः सूर्यो हिरण्मयः पुरुषस्तत्साम्नो द्वितीयपादस्य शिरोमन्त्रस्य च तदङ्गस्य सावित्रमन्त्रस्य च दैवतमिति पारमेश्वरं शिरो व्याख्यातम् । तथाच वसुरुद्रादित्यैः सेवितं द्युलोकं शिखान्तर्वर्तित्वेन य ओषधीनां प्रभवति तारापतिश्चन्द्रमास्तत्साम्नस्तृतीयपादस्य शिखामन्त्रस्य च लक्ष्मीयजुषश्च दैवतमिति पारमेश्वरं शिखाङ्गं व्याख्यातम् । तथा च ब्रह्मलोककवचान्तर्वर्तित्वेन स ब्रह्मेत्यादिमन्त्रवर्णात्तत्साम्नश्चतुर्थपादस्य च तदङ्गभूताया नृसिंहगायत्र्याश्च कवचमन्त्रस्य च दैवतमिति पार-

१ छ. 'याद्य ऋग्य' । २ छ. 'यादः स ब्र' । ३ ग. घ. ङ. छ. 'रिः सेन्द्रः ।

जानीयाद्यो जानीते सोऽमृतत्वं च
गच्छति । ॐ उग्रं प्रथमस्याऽऽद्यं

मेश्वरं कवचं व्याख्यातम्। तथा, ओमिति प्रणवबहुलेन महाचक्रेण पारमेश्वरमन्त्रं व्याख्यातम्। लोकानामङ्गेष्वन्तर्भावात्सामाङ्गदेवतासाहचर्याद्व्यतिषिक्तावेमे लोकास्तस्माद्व्यतिषिक्तान्यङ्गानि भवन्तीति विधायकवचनाच्चेत्येष उपासनाक्रमः। एवं तावन्न्यस्तसामद्वारिकां पारमेश्वरीमुपासनां परिसमाप्याथेदानीं न्यस्तं सामोद्धरति। ननु नायं सामोद्धारः किंतु मन्त्रोद्धार एव सामशब्दस्तु यौगिकवृत्त्या तेन सामर्थ्येन सह वर्तत इति साम मूलमन्त्रः। तत्र "गीतिषु सामाख्या" [ पू० मी० सू० २-१-३६ ] इति गीत्यां सामशब्दस्य रूढत्वात् "रूढिर्योगमपहरति" इति न्यायात्सामोद्धार एव। ननु वेदेन सामशब्दो यौगिकः कृतः• "सैव नाम त्वमासीरमो नामाहं सोम(?)" इत्युपक्रम्य "सा चामश्चाभवतां तत्सामाभवत्तत्साम्नः सामत्वम्" इति श्रुतेः। सत्यं भवतु यौगिकस्तथाऽप्युभयोद्धारे सामोद्धारस्तु सिद्ध एव। एवं रूढेर्वैदिकप्रयोगाच्च सामोद्धारे स्थिते द्वात्रिंशदक्षरं साम जानीयादिति सामान्याकारेण सामसंबन्धे सिद्धे विशेषाकारेण मूलमन्त्राक्षराणां सामसंबन्धं विधातुमाह— उग्रं प्रथमस्याऽऽद्यमित्यादिना। अत्र हि सामगानां हस्ते मुखस्वरनिर्णयो द्रष्टव्यः। सप्तधा हि स्वरः षड्जादिभेदेन। तत्र हस्तगतस्वरानुसारेण मुखेन गीत्युच्चारणं तत्र हस्ताङ्गुष्ठोत्तमपर्वणः क्रौष्टकसंज्ञ उच्चैर्भावे कृते सर्वोदात्तां त्रिमात्रां चतुर्मात्रां पञ्चमात्रां वा कृत्वा विहिताक्षरेषु गीतिं गायेत्तामाद्यं निरपेक्षं स्वरमित्याचक्षते ततोऽङ्गुष्ठोत्तमपर्वणा वक्रीभावे कृते पूर्वोदात्तापेक्षयाऽनुदात्तामुत्तरापेक्षयोदात्तामेवमेवाङ्गुष्ठेन तर्जनीस्पर्शे कृते तत्संनिहिताङ्गुलिस्पर्श उपकनिष्ठिकास्पर्शे कनिष्ठिकामध्यमपर्वस्पर्शे कृते पूर्वपूर्वापेक्षयोत्तरोत्तरापेक्षयोदात्तानुदात्तात्मिकां विहिताक्षरेषु गीतिमुच्चार्याङ्गुष्ठेन कनिष्ठिकामूलपर्वस्पर्शे कृते सर्वानुदात्तां गीतिमुच्चारयेत्तं त्वन्त्यं स्वरमित्याचक्षते। एवं मुखहस्ताभ्यां षड्जादयो यथाक्रमं सप्त स्वरा निष्पाद्यन्ते। स एष सामगानां सर्वसामसाधारणः स्वरनिर्णयः। ततश्च। उग्रं ३। ४। ५ गीतिमात्रासंख्या। उग्रं प्रथमस्याऽऽद्यं सर्वोदात्तं सामपदानुषङ्गादुक्तेऽक्षरद्वय आद्यमाद्यस्वरात्मकं साम जानीयादिति विधीयतेऽन्यथा प्रथमपादस्याऽऽद्यमक्षरद्वयं जानीयादित्येतस्य द्वितीयोपनिषदुक्तपदोद्धारादेव ज्ञातत्वात् "अप्राप्ते शास्त्रमर्थवत्" इति न्यायो बाधितः स्यात्सामपदपदस्य व्यर्थता स्यादुभयविधाने च वाक्यभेदः स्यात्। वेदितव्यसामसंबन्धस्वरविशेषे विहितेऽनिर्धारितस्वरविशेषकं साम कथं विधा-

ज्वलं द्वितीयस्याऽऽद्यं नृसिं तृतीयस्याऽऽद्यं मृत्युं चतुर्थस्याऽऽद्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति तस्मादिदं साम यत्र कुत्रचिन्नाऽऽचष्टे यदि दातुमपेक्षते पुत्राय शुश्रूषवे दास्यत्यन्यस्मै शिष्याय चेति ॥ ४ ॥ क्षीरोदार्णवशायिनं नृकेसरिं योगिध्येयं परमं पदं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति

---

तुं शक्येत तस्मान्मूलमन्त्रोक्तप्रथमपादाक्षरद्वयस्याऽऽद्यशब्दोक्तस्वरविशेषात्मकसामसंबन्ध एव विधीयते । एवमुत्तरेष्वपि त्रिषु वाक्येषु योजनीयम् । ज्वलं ३।४।५ गीतिमात्रासंख्या । द्वितीयस्य पादस्याऽऽद्यं साम गीतिं जानीयात् । नृसिं ३।४।५ गीतिमात्रासंख्या । तृतीयस्याऽऽद्यमित्युक्तार्थम् । मृत्युम् ३ । ४ । ५ गीतिमात्रासंख्या । चतुर्थस्याऽऽद्यमित्यादि गच्छतीत्यन्तमुक्तार्थम् । यस्मादिदं साम परमरहस्यतरं तस्मादिदं साम यत्र कुत्रचित्पुंसि नाऽऽचष्ट इति कथयितुर्निषेधः । यदि दातुमपेक्षते पुत्राय शुश्रूषवे शुश्रूषारतायाऽऽचार्योपसर्पणेन श्रवणेच्छावते दास्यति दद्यादित्यर्थः । अन्यस्मै शिष्याय प्रागुक्तलक्षणाय चेति । इतिशब्दः सामदातृप्रतिग्रहीत्रोरधिकारसमाप्तिं द्योतयति ॥ ४ ॥

एवं तावत्साम्ना सह दातृप्रतिग्रहीत्रोः संबन्धं विधाय श्रीक्षीरोदार्णवशायिनो नृकेसरिणो योगिवदासीनस्य ध्येयस्याऽऽश्रयाश्रयिलक्षणसंबन्धविशेषोपासनां कृत्स्नफलवतीं विधातुमाह—क्षीरोदार्णवशायिनं ना चासौ केसरी च नृकेसरी तं नृकेसरिणम् । नृकेसरिमिति छान्दसम् । योगिवदासीनं शेषभोगमस्तकपरिवृतं रहस्यकल्पान्तरपर्यालोचनयाऽस्मिन्नेव स्थाने शाखान्तरश्रुत्यन्तरपर्यालोचनयाऽऽसीनं शेषभोगमूर्धावृतम् । द्विशाखगामिनीयमुपनिषद्भृगुशाखायां च । परमं पदं परमाश्रयभूतम् । जानीयादिति सर्वत्रानुषज्यते । सामेत्यादि गच्छतीत्यन्तमुक्तार्थं भवति । यत्साम जानीयात्तदुक्तगुणविशिष्टे नृकेसरिणि साङ्गं न्यस्तं जानीयादित्यर्थः । इदानीं साम्नो द्वितीयोद्धारमक्षराणां

---

१ छ. °य चेति । २ ख शक्यते ।

वीरं प्रथमस्यार्धान्त्यं तंसं द्वितीयस्यार्धान्त्यं हंभी तृतीयस्यार्धान्त्यं मृत्युं चतुर्थस्यार्धान्त्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति तस्मादिदं साम येन केनचिदाचार्यमुखेन यो जानीते स तेनैव शरीरेण संसारान्मुच्यते मोचयति मुमुक्षुर्भवति जपात्तेनैव शरीरेण देवतादर्शनं करोति

---

स्वरविशेषसंबन्धार्थमाह—वीरं प्रथमस्यार्धान्त्यं प्रथमपदोक्ताक्षरद्वय आद्यार्धे "प्रथमातिक्रमे कारणाभावात्" इतिन्यायेनान्त्यमन्त्यस्वरात्मकं साम जानीयादित्यनुषज्यते । अत एवास्मिन्नेत्र स्थाने शाखान्तरे पाठान्तरं वीरं प्रथमाद्यार्धस्यान्त्यमिति विधानविषये प्रागुक्ते चोद्यसमाधाने ततो वीरोऽनुदात्तात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ रं मध्यवर्तिस्वरात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ एवमुत्तरेष्वपि तदुद्धारवाक्येषु योजनीयम् । तंसं द्वितीयस्यार्धान्त्यमित्युक्तार्थम् । तमनुदात्तात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ हंभी तृतीयस्यार्धान्त्यम् । तृतीयाद्यार्धस्यान्त्यमिति पाठान्तरम् । हमनुदात्तात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ भीमध्यवर्तिस्वरात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ मृ अनुदात्तात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ । त्युं पारिशेष्यान्मध्यवर्तिस्वरात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ चतुर्थस्यार्धान्त्यमित्युक्तार्थम् । मृत्युं चतुर्थाद्यार्धस्यान्त्यमिति पाठान्तरम् । समेत्यादि गच्छतीत्यन्तमुक्तार्थम् । यस्मात्सामैकदेशपरिज्ञानात्कृत्स्नफलावाप्तिस्तत्र कृत्स्नसामपरिज्ञाने किमुतेत्याह—तस्मादिदं विहिताक्षरेषूद्धृतं कृत्स्नं साम येन केनचिद्येन केनापि सामोद्धारवाक्यकदम्बकेनापि यो जानीत इत्यनुषङ्गः । आचार्यमुखेन यो जानीत इत्याचार्यमुखोपायान्तरयोर्विकल्पः । यद्वाऽऽचार्यशब्दो वेदमभिधत्ते तस्मादाचार्यवचः प्रमाणमित्यादौ प्रयोगादाचार्यमुखेन वेदमुखेन सामोद्धारवाक्यकदम्बकेनेत्यर्थः । स तेनैव स्वयमेव सामपरिज्ञानेन संसारान्मुच्यते मोचयत्यन्यं वा साम ज्ञापयन् । सामपरिज्ञानात्सरागोऽपि मुमुक्षुर्भवति संख्यानुपादानात्सकृदेव सामजपाद्यत्साम्नेन साम्ना पारमेश्वरं शरीरं क्षीरोदार्णवस्थं पदकदम्बकव्याकृतं तेनैव शरीरेण देवतादर्शनं करोति

तस्मादिदमेवं मुख्यं द्वारं कलौ नान्येषां भवति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते स मुमुक्षुर्भवति ॥ ५ ॥ ॐ ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहम् । कृष्णपिङ्गलमूर्ध्वरेतं विरूपाक्षं शंकरं नीललोहित-

देवता प्रत्यक्षा भवति। तस्मादिदमेव साङ्गं सामैव मुख्यं द्वारं देवतादर्शने तद्व्याकृतौ च कलौ पापबाहुल्येनान्येषां सामरहितानां केवलमूलमन्त्रपरिज्ञातॄणां देवतादर्शनं झटिति न भवतीत्यर्थः । यस्मादिदं साङ्गं सामदेवतादर्शने देवताकारव्याकृतौ च मुख्यमेव द्वारं तस्मादिदं साङ्गं साम जानीयान्मुमुक्षुर्भवति मानुषानन्दारूढोऽप्येतत्परिज्ञानान्मानुषानन्दं विहाय मोक्षेप्सुर्भवति । यद्वा मुमुक्षुरेतज्जानीयादित्यन्वयः । तस्य भवतीति फलनिर्देशः । भू सत्तायामिति धातो रूपम् । साकारब्रह्मोपासनाद्वारं सन्मात्रतां प्राप्नोतीत्यर्थः ॥ ५ ॥

एवं तावद्यदङ्गमुपास्यदेवताकारव्याकृतौ क्षमं तदेवाङ्गं निर्दिशन्नाह— ओमिति। तच्चतुर्थोपनिषदि स्पष्टी करिष्यति । ओमित्येतदक्षरमित्यादिना नृकेसरिविग्रहो व्याख्यातः स न स्वमायया लीलाविग्रहः किं तु कर्मविपाकजन्मानुभवरूपाणां केवलतिर्यग्रूपाणां मत्स्यकूर्मादीनां केवलातिर्यग्रूपाणां वामनादीनां लीलारूपत्वेनैव दृष्टत्वादस्य च तद्विलक्षणत्वान्न स्वमायालीलाविग्रहता स्यादितीमामाशङ्कां मन्त्रवर्णादपनेतुं मन्त्रमाह—ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहम्। ना च पुरुषश्च केसरी च सिंहश्च नृकेसरी। तत्र पुरुषमित्यनूद्य सत्यं परं ब्रह्म जानीयादिति विधीयते । एतदुक्तं भवति । सत्यस्य परब्रह्मणः स्वमायया लीलाविग्रहं पुरुषाकारमूर्तमिति परमार्थं जानीयादिति यावत्। यद्वा, ऋतं सत्यं परं ब्रह्म ब्रह्मात्मकं पुरुषाकारमोमित्योंकारेण व्याख्यातम् । ऋतमिति धननामर्तमयं हिरण्मयं हिरण्यमयं जानीयादित्यर्थः । अत एव सतो बन्धुमिति बन्धुरिति धननाम ब्रह्मणो विवर्तं हिरण्मयमसति ब्रह्मणि हृदि निरविदन्निति कैश्चिद्व्याख्यातम् । कृष्णपिङ्गले अक्षिणी अस्य तं तथोक्तम् । ऊर्ध्वरेतमिति च्छान्दसम् । ऊर्ध्वरेतस्कं योगारूढमासीनं विरूपाक्षं ललाटनेत्रं ललाटनेत्रेण रौद्रतां प्राप्नोति तद्व्यावृत्त्यर्थं शंकरं सुखकरं वरदाभयहस्तं शंकरसाहचर्यान्नीललोहितमिति नीलकण्ठमुर्वरितप्रदेशे लोहितम् । नीललोहितौ वर्णौ ललाटनेत्रयोर्यथायोग्यतयाऽस्य धृतौ तथोक्तम् । कल्पान्तरे तु श्वेतवर्णमेवं

१ क. ख. ग. च. °व मोक्षद्वा° । २ ङ. छ. °यान्मुमुक्षु° । ३ ज. °वलं म°।

मुमापतिं पशुपतिं पिनाकिनं ह्यमितद्युतिमीशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्यो यजुर्वेदवाच्यस्तं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति। महा प्रथमान्तार्धस्याऽऽद्यम्। वैतो द्वितीयान्तार्धस्याऽऽद्यं षणं[1]

सुवर्णलोहितशुक्लाकाराणां विकल्पः। कामनावशाद्व्यवस्था वाऽतो वाक्यार्थः। उमापतिम्। उ प्रसिद्धौ मा लक्ष्मीस्तस्याः पतिर्लक्ष्मीपतिः। अथवा प्रसिद्धोमा गौरी तस्याः पतिः। श्रिया लक्ष्मीति सप्त शक्तयो वक्ष्यन्ते। पशुपतिः। पशूनां देवानां पतिः। पशूनां प्राणिनाम्। यद्वा पशूनां वेदानां गायत्र्यादीनाम् "पशवो वै छन्दांसि" इति श्रुतेः। पिनाकिनं पिनाकधनुर्हस्तम्। हीति निश्चितार्थः। अमितद्युतिममितप्रकाशम्। ईशानः सर्वविद्यानां प्रभुः। ईश्वरः सर्वभूतानां प्रभुः। ब्रह्माधिपतिः। ब्रह्म तपो मनसो विषयेभ्यो विवर्त्य दर्शनं पूर्वोक्तोपासनं तस्याधिपतिः। ब्रह्मणोऽधिपतिर्ब्रह्मणोऽधिष्ठाता। ब्रह्मेत्यन्ननामान्नं क्षीरं ततश्च क्षीरस्याधिष्ठाता। यद्वा ब्रह्मणोऽथर्ववेदस्याधिष्ठाता। एवं यो यजुर्वेदवाच्यः प्रागुक्तेन यजुषा वेदेन वाच्यो यजुर्वेदवाच्यः। प्रागुक्तानां गुणानां प्रथमानिर्दिष्टानां जानीयादित्यनेनान्वयं कर्तुं विशिष्टतयैकत्वाभिप्रायेण द्वितीयान्ततया निर्दिशति—तमिति। सामेत्यादि गच्छतीत्यन्तमुक्तार्थम्। एवं प्रागुक्तमाकारं नृकेसरिण्येव जानीयात्। अत्र केचित्प्रागुक्तमाकारं मन्त्रवर्णात्पृथक्त्वेनोपास्यमाचक्षते तदयुक्तम्। एवं तर्ह्युपक्रमोपसंहाराभ्यां नृसिंहब्रह्मविद्यैक्यमवगतं बाध्येत। नृसिंहपदव्याख्यानावसरे नृसिंह एवाऽऽसीत्परमेश्वर इति नृसिंहेश्वरयोः सामानाधिकरण्यमवगतं बाध्येत। तस्मात्त्रिनेत्राद्याकारविशिष्टोऽस्यां विद्यायां नृसिंह एवोपास्य इति सिद्धम्। अथेदानीं तृतीयं सामोद्धारमाह—म पारिशेष्यान्मध्यस्वरगीतिर्मात्रासंख्या ३।४।५ हा सर्वोदात्तात्मिका गीतिर्मात्रासंख्या ३।४।५ प्रथमान्तार्धस्याऽऽद्यमिति। प्रथमपादोक्ताक्षरद्वयेऽन्त्यार्धस्याऽऽद्यस्वरमाद्यस्वरयुक्तं साम जानीयादित्यनुषज्यते। वै पारिशेष्यान्मध्यस्वरवर्तिगीतिर्मात्रासंख्या ३।४।५ तो सर्वोदात्तात्मिका गीतिर्मात्रासंख्या ३।४।५ द्वितीयान्तार्धस्याऽऽद्यमित्युक्तार्थम्। ष पारिशेष्यान्मध्यस्वरवर्तिगीतिर्मात्रासंख्या ३।४।५ णम्, सर्वोदात्तात्मिका गीतिर्मा-

१ ङ. छ. °यान्त्यार्ध°। २ ग. घ. भीषणं।

तृतीयान्तार्धस्याऽऽद्यं नमा चतुर्थान्तार्धस्याऽऽद्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । तस्मादिदं[2] सच्चिदानन्दमयं[3] परं ब्रह्म तमेवं विद्वानमृत इह भवति । तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ६ ॥

आसंख्या ३ । ४ । ५ तृतीयान्तार्धस्याऽऽद्यमित्युक्तार्थम् । न पारिशेष्यान्मध्यस्वरवर्तिगीतिर्मात्रासंख्या ३ । ४ । ५ मा सर्वोदात्तात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ चतुर्थान्तार्धस्याऽऽद्यमित्युक्तार्थम् । सामेत्यादि गच्छतीत्यन्तमुक्तार्थम् । नन्वत्राक्षरद्वयमध्येऽन्तार्धस्येत्यन्तस्याक्षरस्यार्धं दीर्घादिमात्रा तस्या आद्यस्वरसंबन्धः कस्मान्न विधीयते । तन्न । षष्ठीतत्पुरुषात्कर्मधारयस्य बलीयस्त्वादन्तं च तदर्धं चान्तार्धं प्रथमापेक्षया द्वितीयमक्षरमन्तं च तदर्धं चेति । अन्यथाऽन्तस्याक्षरस्य मात्राद्यर्धमिति षष्ठीतत्पुरुषः "एतया निषादस्थपतिं याजयेत्" इति न्यायात् । नन्वतितुच्छमेतन्मात्रायामप्याधारापेक्षया कर्मधारयसंभवात् । सत्यम् । द्वात्रिंशदक्षरं सामेत्यत्र द्वात्रिंशदक्षराणामेव स्वरात्मकसामसंबन्धः श्रूयते न मात्राणां तस्मादन्तार्धशब्देन द्वितीयाक्षरस्यैवाऽऽद्यस्वरसंबन्धो विधीयत इति सिद्धम् । यस्मात्सामैकदेशोऽपि कृत्स्नफलावाप्तौ क्षमः किमुत कृत्स्नसामज्ञानम् । तस्मादिदं सच्चिदानन्दमयं परं ब्रह्मेति । तादृशनृसिंहप्रतिपादकमूलमन्त्राभिव्यञ्जकत्वाद्ब्रह्म । जानीयादित्यनुषज्यते । सामाभिव्यक्तमूलमन्त्रप्रतिपाद्योऽयं नृसिंहाकारसच्चिदानन्दं ब्रह्मेत्येकः संबन्धः । यद्वा सच्चिदानन्दमयं ब्रह्मेत्येकः । प्रागन्त्रवर्णाद्ब्रह्माकारता प्रतिपादिताऽप्यदृढा स्यादिति शङ्कां तद्व्यावृत्त्यर्थमिदमुच्यते सच्चिदानन्दमयं ब्रह्म जानीयादिति । तं नृसिंहाकारममुमेवमुक्तप्रकारेण जानन्नमृते क्षीरं पञ्चामृतान्यानयेत्यादावमृतशब्दस्य क्षीरे दृष्टत्वादिहैव लोक उत्कृष्टो भवतीत्यर्थः । यद्वैवं पञ्चाङ्गन्यासे कृत इहैव जीवन्मुक्तो भवत्यानन्दो भवतीत्यर्थः । यस्मात्साङ्गं साम कृत्स्ननृसिंहब्रह्मविद्याप्रतिपादकमूलमन्त्राभिव्यञ्जकं तस्मादिदमित्यादि गच्छतीत्यन्तमुक्तार्थम् ॥ ६ ॥

१ ह. छ. °यान्त्यार्धं° । २ च. °दं सा° । ३ क. °यं साम प° ।

विश्वसृज एतेन वै विश्वमिदमसृजन्त यद्विश्वमसृजन्त तस्माद्विश्वसृजो विश्वमेनाननु प्रजायते ब्रह्मणः सायुज्यं सलोकतां यन्ति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति। विष्णुं प्रथमस्यान्त्यं मुखं द्वितीयस्यान्त्यं

अस्य साम्न उक्तप्रकारेण विश्वस्रष्टृत्वं दर्शयितुमाह—विश्वसृज एतेन साम्ना नृसिंहब्रह्मविद्याप्रतिपादकमूलमन्त्राभिव्यञ्जकेन। वै प्रसिद्धम्। सर्वमिदमसृजन्त। यद्यस्मात्सर्वमसृजन्त तस्मात्। विश्वसृज इति सृक्शब्दं निर्वक्ति। विश्वमेनाननु प्रजायते। ब्रह्मणः सायुज्यं सलोकतां यन्तीत्युपासकानां तादात्म्यभेदोपासनया भेदेन फलनिर्देशः। ब्रह्मणः सायुज्यं सलोकतां यन्तीति यस्मात्साङ्गात्साम्न ईदृशमुपासकानां फलं तस्मादिदमित्यादि गच्छतीत्यन्तमुक्तार्थम्। तस्मादिदं साङ्गं सामेत्यसकृदभ्यासस्यायमभिप्रायः साङ्गसाम्नैव कृत्स्नब्रह्मविद्याप्रतिपादकमन्त्राभिव्यक्त्या या ब्रह्मविद्योत्पन्ना सैव फलवती नान्येति। अत एवोक्तं तस्मादिदमेव मुख्यं द्वारं कलाविति पापभूयिष्ठेऽत्र कालेऽस्यैव मुख्यताऽन्येषां तु गौणतेति। कालान्तरे त्वस्या अन्यस्य वैकल्पिकी मुख्यतेति सर्वमनवद्यम्। अथेदानीं चतुर्थं सामोद्धारमाह—विष्णुं सर्वानुदात्तात्मिका गीतिर्मात्रासंख्या ३।४।५ प्रथमस्यान्त्यमिति। प्रथमपादोक्ताक्षरद्वयेऽप्यन्त्यमन्त्यस्वरयुक्तं जानीयादिति प्राक्तनमनुषज्यते। मुखं सर्वानुदात्तात्मिका गीतिर्मात्रासंख्या ३।४।५ द्वितीयस्यान्त्यमिति। द्वितीयपादोक्ताक्षरद्वयेऽप्यन्त्यस्वरयुक्तं सामेति संबन्धः। ननु सर्वोद्धारेषु प्रथमद्वितीयशब्दौ कस्मात्पादाभिप्रायेण व्याख्यायेते नोक्ताक्षरसंख्यापेक्षया। तथाहि। प्रथमान्त्यमित्युक्ताक्षरद्वयमध्ये प्रथमस्याक्षरस्यान्त्यं स्वरं जानीयादिति। तथा द्वितीयान्त्यमित्युक्ताक्षरद्वयमध्ये द्वितीयस्याक्षरस्यान्त्यं स्वरं जानीयादेवं प्रथमोद्धारेऽपि प्रथमस्याक्षरस्य द्वितीयस्याक्षरस्याऽऽद्यस्वरं जानीयादिति कस्मान्न व्याख्यायते। उच्यते। सर्वत्र ह्यक्षरद्वयमुक्त्वैव प्रथमद्वितीयतृतीयचतुर्थशब्दाः श्रूयन्ते न ह्यक्षरद्वयोक्तौ तृतीयचतुर्थशब्दावुपपन्नौ तृतीयचतुर्थयोरक्षरयोरभावादिति पादाभिप्रायेण व्याख्येयाविति निश्चिते तत्साहचर्यात्प्रथमद्वितीयशब्दावक्षरद्वयोक्तावनुपपन्नाविति नाक्षराभिप्रायेण व्या-

१ ग. घ. 'मतान।

भद्रं तृतीयस्यान्त्यं म्यहं चतुर्थस्यान्त्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति योऽसौ[1] सोऽवेदयदिदं किं चाऽऽत्मनि ब्रह्मण्यानुष्टुभं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । स्त्रीपुंसोर्वा य इहैव स्थातुमपेक्षते[2] स सर्वैश्वर्यं ददाति यत्र कुत्रापि म्रियते देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे

ख्येयौ किंतु पादाभिप्रायेणैवेति स्थितम् । भद्रम् । सर्वानुदात्तात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ तृतीयस्यान्त्यमित्युक्तार्थम् । म्यहम् । सर्वानुदात्तात्मिका गीतिर्मात्रासंख्या ३ । ४ । ५ चतुर्थस्यान्त्यमित्युक्तार्थम् । ननु कस्मान्नैरन्तर्येण सामोद्धाराभावो नैरन्तर्येण ह्युद्धृते साम्नि सौकर्यं स्याद्द्वितीयोपनिषदुक्तपदोद्धारवत् । उच्यते । सत्यं सौकर्यं स्यात्किंतु सामद्रष्टा प्रजापतिः सर्वान्देवान्द्रष्टुं शक्तोऽपि मूलमन्त्रवन्नेदं सामापश्यत्किंतु तद्दर्शनायास्यामुपासनायामुपासनैकदेशानुष्ठानादीषच्छुद्धान्तःकरणः प्रथमोद्धारमपश्यत्पुनश्च क्षीरोदार्णवाद्युपास्यमुपास्य द्वितीयमुद्धारमपश्यदेवमप्यधिकोपासनानुष्ठानादभ्यधिकशुद्धान्तःकरणस्तृतीयं चतुर्थमपश्यदिति प्रजापतेरपि तद्दर्शने महानायासः किमुतान्येषामिति नैरन्तर्येण सामोद्धाराभावः । साम्नो दुर्लभतां दुर्दर्शनतां च दर्शयति—यः प्रजापतिरसौ स प्रजापतिरवेदयन्निवेदितवाननुपदिष्टवानिदं किं च यदिदं प्रागुक्तमुपासनमात्मनि ब्रह्मणीति ब्रह्मण्यात्मनीति ब्रह्मात्मकतां स्वस्मिन्परिज्ञायाऽऽनुष्टुभमनुष्टुप्संबन्धि सामद्वारकमुपासनं जानीते यो जानीते सोऽमृतत्वं च गच्छतीत्युक्तार्थम् । स्त्रीपुंसोर्वा स्त्रियां वा पुंसि वा प्रागुक्तमुपासनं प्रजापतिरुपदिष्टवानित्यर्थः । अथवा ब्रह्मणि हिरण्यगर्भ एतदुपासनं स्त्रीपुंसोर्वा यद्वाऽऽत्मनि ब्रह्मणीति ब्रह्मणि परमेश्वर आनुष्टुभं साम न्यस्तं जानीते । अस्मिन्पक्षे प्रागुक्तो यच्छब्द उपास्यपरो न प्रजापतिपरः । स्त्रीपुंसोर्वा स्त्रीपुंसोश्च वाशब्दः समुच्चयार्थो वायुर्वा त्वा मनुर्वा त्वेत्यादौ दृष्टत्वात् । एतदुक्तं भवति । उपास्येश्वरे सामन्यासं कृत्वोपासकेनाऽऽत्मन्यपि सामन्यासः कार्यः । य उपासक इह लोक उत्कर्षेण स्थातुमपेक्षते तस्मै सर्वैश्वर्यं ददाति । देहान्ते तु देवः परं ब्रह्म तारकं व्याचष्टे कामिनं प्रकृत्य देहान्त इति विशेष-

१ क. ख. च. °सौ स वेद य° । ग. °सौ स देवेभ्योऽवे° । छ. °सौ साम वेद य° । २ ङ. °ते सर्वं° ।

येनासावमृती भूत्वा सोऽमृतत्वं च गच्छति। तस्मादिदं साममध्यंगं[2] जपति तस्मादिदं सामाङ्गं प्रजापतिस्तस्मादिदं[3] सामाङ्गं प्रजापतिर्य एवं वेदेति महोपनि-

णोपादानात्कामित्वेन प्रागधिकाराच्च निष्कामस्यार्वागपि देवः परं ब्रह्म तारकं प्रणवस्थं सामाङ्गं प्रणवेन व्याख्यातम्। येन प्रणवेन व्याख्यातेनामृती भूत्वा स श्रोताऽमृतत्वं च कैवल्यं प्राप्नोति। यस्मात्तारकस्थं परब्रह्म व्याख्येयं तस्मादिदं तारकं साममध्यगं साममध्यवर्तिकं जपति सामोपासनाङ्गप्रणवजपो यथाशक्तीति दर्शयति। एतदेवाऽऽह—तस्मादिदं तारकं साम्नोऽङ्गं प्रजापतिर्ऋषित्वेन। यद्वेदं तारकं परमेश्वरस्वरूपाख्यानेन साम च परमेश्वरविषयविद्याप्रतिपादकमूलमन्त्राभिव्यञ्जकत्वेन प्रजापतिरुभयकथनेनेत्येतात्रितयमवश्यमुपासनायामङ्गम्। एतदेव त्रितयमस्यामुपासनायामावश्यकमिति दर्शयितुं द्विरभ्यासस्तस्मादिदं सामाङ्गं प्रजापतिस्तस्मादिदं सामाङ्गं प्रजापतिरिति। यस्मादेवं साम तस्मादस्य नैरन्तर्येणोद्धारः स्पष्टी क्रियते। तत्र मूलमन्त्रप्रथमपादाक्षरेष्वष्टसु मुखहस्ताभ्यां हस्ताङ्गुष्ठोत्तमपर्वोच्छ्रयेणाऽऽद्यमक्षरद्वयं मुखेन प्रागाय तृतीयमक्षरं कनिष्ठिकामूलपर्वस्पर्शेन तथैव मुखेन प्रागाय चतुर्थं पञ्चमं चैकैकं पृथक्पृथगङ्गुष्ठोत्तमपर्वतर्जनीस्पर्शतत्संनिहिताङ्गुल्युपकनिष्ठिकाकनिष्ठिकामध्यमध्यपर्वस्पर्शेन तथैव मुखेन प्रागायेत्षष्ठमङ्गुष्ठोत्तमपर्वोच्छ्रयेण तथैव मुखेन प्रागायेत्सप्तमाष्टमाक्षरे कनिष्ठिकामूलपर्वस्पर्शेन यथाविहितस्वरैराद्याक्षरद्वयाद्यतृतीयाक्षरान्त्यचतुर्थपञ्चमाक्षरमध्यषष्ठाक्षराद्यसप्तमाष्टमाक्षरान्त्यैरप्रमत्तस्तथैव मुखेन गायेत्। तथैव तृतीयषष्ठयोरङ्गुलीभ्यां दीर्घं गृह्णीयादेवं द्वितीयतृतीयचतुर्थपादाक्षरेष्वष्टसु साम गेयं द्वितीयपादे षष्ठं दीर्घं तृतीये चतुर्थमक्षरं दीर्घं चतुर्थे षष्ठं दीर्घमिति शुद्धं साम साङ्गं चेत्प्रथमपादान्ते प्रणवं निक्षिप्य द्वितीयपादान्ते सावित्रीं तृतीयपादान्ते यजुर्लक्ष्मीं चतुर्थपादान्ते नृसिंहगायत्रीं गायेत्। स्त्री चेच्छूद्रश्चेदेतत्त्रितयं विहाय शुद्धं साम गायेदेष नैरन्तर्येण सामोद्धार उच्चारस्यातिदुर्लभत्वादतिरहस्यत्वाच्च लिखितोऽपि न लिखित्वा प्रदर्श्यते वाचैव स्पष्टी क्रियत इति। य एवमुक्तप्रकारेण वेदोपास्ते। इतिशब्दोऽस्या उपासनाया नामकरणं करोति। उपनिषत्त्वेष समयः प्रणवगर्भितप्रणवबहुलोपासनानां महोपनि-

१ ख. घ. च. °नाम्रं°। २ घ. °ध्यमं ज°। ३ ख. घ. च. °तिर्य°।

षद्य एतां महोपनिषदं वेद स कृतपुरश्चरणोऽपि महाविष्णुर्भवति महाविष्णुर्भवतीति ॥ ७ ॥

इत्यथर्ववेदान्तर्गतनृसिंहपूर्वतापनीयोपनिषदि प्रथमोपनिषत्समाप्ता ॥ १ ॥

देवा ह वै मृत्योः पाप्मभ्यः संसाराच्चाबिभयुस्ते

षदिति नाम । तत्र तत्र महोपनिषदुपनिपूर्वस्य सदेः क्विबन्तस्य गत्यवसादनविशरणार्थत्वान्महद्ब्रह्म गमयति ज्ञापयतीति महोपनिषन्महान्तं संसारमवसादयति क्लेशयति नाशयतीति वा महोपनिषदिति । ओमित्यात्मानं युञ्जीतैतद्वै महोपनिषदमिति श्रुतेः । य एतामुक्तप्रकारेण प्रतिपादितां महोपनिषदं वेदोपास्ते स उपासकः कृतपुरश्चरणः कृतं प्रागुक्तोपासनं येन स तथोक्तः । महाविष्णुर्भवति । विप्लृ व्याप्तौ । द्विरभ्यासः प्रथमोपनिषत्समाप्तिं द्योतयति ॥ ७ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत आद्यकृतावाथर्वणतापनीयोपनिषद्भाष्ये प्रथमोपनिषद्व्याख्या संपूर्णा ॥ १ ॥

एवं तावत्प्रथमोपनिषदन्ते य एतां महोपनिषदं वेदेत्येतच्छब्दपरामृष्टसामोपनिषदो महोपनिषदश्च सामानाधिकरण्यमुक्तम् । महोपनिषच्च द्वात्रिंशन्नृसिंहलीलाविग्रहस्तुतिमन्त्रात्मिका तस्या अन्ते य एवं महोपनिषदित्युपसंहारात्तत्र तावदुभयोपनिषत्सामानाधिकरण्यात्सामाभिव्यक्तमूलमन्त्रद्वात्रिंशदक्षरेषु महाचक्रन्यस्तेषु नृसिंहद्वात्रिंशद्व्यूहानुपास्य तैरेव मन्त्रैस्तां देवतां स्तुत्वा सामोपासनां कुर्यादित्यवगम्यते । अत एव स्तुत्युपनिषदः पुरश्चरणोपासनार्थत्वमाह स कृतपुरश्चरण इति । कृतं पुरश्चरणं स्तुत्युपासनया येन स तथोक्तः । एवं पुरश्चरणोपासनायां मुमुक्षोरुपासकस्याधिकारसंपत्तिमभिधाय तस्यैव तदुपासनास्वीकारेऽन्यदप्यधिकारिविशेषणमाख्यायिकामधिकारपूर्वकमाह—देवा ह वै मृत्योरिति । देवा अकृतपुरश्चरणा वै मृत्योरबिभयुस्त उपासका देवा मृत्योर्मरणहेतोर्वैवस्वतात्स च मृत्युः पाप्मपूर्वक इति पाप्मभ्यः संसाराज्ञानभयात्समस्ताद्यस्ताद्द्वितयाद्भयमागच्छंस्तच्च पापं संसारपूर्वकमिति संसाराच्चाबिभयुरिति प्रत्येकं संबध्यते ।

१ क. छ. एवमेतां । २ क. ख. ग. घ. च. छ. °द सकृत्पुर° । ३ ख. ङ. छ. °णो म° ।

प्रजापतिमुपाधावंस्तेभ्य एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रायच्छत्तेन वै सर्वे मृत्युमजयन्सर्वे पाप्मानमतरन्संसाराच्चातरंस्तस्माद्यो मृत्योः पाप्मभ्यः संसाराच्च बिभीयात्स एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयात्स मृत्युं जयति स पाप्मानं तरति स संसारं तरति

द्विविधा ह्युपासका देवा मुमुक्षवोऽमुमुक्षवश्चेति । तत्र मुमुक्षूणां त्रितयं समुच्चितं विशेषणम् । अमुमुक्षूणां व्यस्तं द्वितयं विशेषणं केचन मृत्योर्जयमेव कामयन्ते केचन पाप्मन एव जयमन्ये तु त्रितयजयं ते द्विविधा देवाः प्रजापतिमुपाधावन् । उपपूर्वको धावतिः पूजामाह । समीपमेत्य प्रजापतिमपूजयन्स्तुतिशुश्रूषादक्षिणाभिश्च । तेभ्यो देवेभ्यः प्रीतः प्रजापतिरेतं मन्त्रराजमित्याद्यानुष्टुभमित्यन्तं सर्वमुक्तार्थं प्रायच्छत्प्रादात्तेन प्रदानेन वै स प्रजापतिर्मृत्युमजयद्देवा अपि मृत्युमजयन् । अजयन्निति बहुवचनात्स इत्येकवचनादुभयत्रापि प्रकृत्यर्थसंबन्धे प्राप्ते यथायोग्यतया वचनं योज्यम् । तथा तेनेत्यर्थप्राप्तं स्वीकरणं परामृश्यते । एतदुक्तं भवति । तेन प्रदानेन प्रजापतिर्मृत्युमजयत्तेन स्वीकारेण देवा मृत्युमजयन्निति । कैश्चिदेवं व्याख्यातं समृत्युमिति समस्तं कृत्वा सह मृत्युना वर्तते यदज्ञानं तत्तथोक्तं तन्न । पूर्वं तस्याप्रकृतत्वात् । अथार्थप्राप्तं प्रकृतमिति चेद्भवतु न कश्चिद्विरोधः किंतु दातुः फलं न संकीर्तितं स्यादिति दाता कथं प्रवर्तेत । दक्षिणादिभिरिति चेन्न । विरक्ते तु का वार्ता । तस्मादुभयत्रापि फलवत्युपासनेति व्याख्या ज्यायसी । एवमुत्तरत्रापि व्याख्येयम् । पाप्मानं ससंसारमतरदतरन्निति च । यस्मादिदमुभयत्र फलवत्तस्माद्यः प्रागुक्त उपासको मृत्योः पाप्मभ्यः संसाराच्च बिभीयात्समस्ताद्व्यस्ताद्वितयाद्वयं गच्छेत्स प्रागुक्त उपासको गुरूपसर्पणेन । एतं मन्त्रराजमित्यादि स संसारं तरतीत्यन्तं स्पष्टार्थम् । प्रतिगृह्णीयात्स्वीकुर्यादित्यर्थः । अनेनैतद्दर्शयति मूलमन्त्रमात्रे गुरूपसर्पणमावश्यकम् । सामप्रभृत्युपासनांशे गुरूपसर्पणाच्छ्रुतितस्तद्व्याख्यानाद्वेति विकल्पः । तस्मादिदं साम येन केनचिदाचार्यमुखेनेति श्रुतेः । अत एवैतद्विषयरहस्यकल्पग्रन्थानसमर्थश्चेद्गुरुमुखाच्छृणुयात्समर्थश्चेत्स्वयमेवावेक्षेत । मूलमन्त्रं सबीजं सशक्तिकं साङ्गं सन्यासं गुरुमुखात्स्वीकृत्यैवं प्रागुक्तस्योपासकस्य मुमुक्षोः प्रागुक्तं समस्तं विशेषणमित-

१ घ. ङ. वै मृ° । २ घ ङ. °यन्पाप्मा° ।

तस्य ह वै प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिरृग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः स साम्नः प्रथमः पादो भवति द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुब्दक्षिणाग्निः स साम्नो द्वितीयः पादो भवति तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रा आदित्या जगत्याहवनीयः स साम्नस्तृतीयः पादो भवति याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः सोऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेक ऋषिर्भास्वती सा साम्नश्चतुर्थः पादो भवति ॥ १ ॥

रस्य द्वितयं विशेषणमुभयत्रापि स्तुत्युपनिषत्प्रतिपादितं स्तवनं तेषां व्यूहानामुपासनं साम्ना मूलमन्त्राभिव्यक्तिश्चेति त्रितयमप्येतत्पुरश्चरणरूपत्वात्साधारणम् । एवं विशिष्टमधिकारिणमभिधाय तदुपासनाप्रारम्भस्य प्रणवोपासनापूर्वकत्वात्प्रणवमात्रा नृसिंहव्यूहे । ॐ स ॐ ॐ यो वै नृसिंहो देवो भगवान्याश्चार्धचनस्रो मात्रास्तस्मै वै नमो नम इति मन्त्रवर्णात्पुरश्चरणोपासनान्तर्गतत्वेनाऽऽदित्वेन स्थितेऽपि मात्राशब्दादर्धशब्दाच्चतुःशब्दाच्च तन्मात्राव्यूहप्रत्यभिज्ञानात्तस्मिन्नेव व्यूहे चतुर्मात्रासंबन्धित्वेनोपासनाविशेषमाह—तस्य प्रागुक्तस्य मन्त्रराजस्य साम्नः सामाभिव्यक्ताक्षरस्य संपुटितत्वेन स्थितस्य ह निश्चितं सामाभिव्यक्तमूलमन्त्राक्षरसंपुटीकरणेन स्थितत्वात्साम्ना संबन्धः । तस्मात्प्रत्यक्षरमुभयत ओंकारो भवतीति श्रुतेः । प्रणवस्य या पूर्वा मात्रेत्यादि सा साम्नश्चतुर्थः पादो भवतीत्यन्तं स्पष्टार्थम् । अकारोकारमकारार्धमात्रा नादात्मिका यथासंख्यं पृथिव्यन्तरिक्षद्युसोमलोकऋग्यजुःसामाथर्वणब्रह्मविष्णुमहेश्वरोंकारवसुरुद्रादित्यमरुद्गायत्रीत्रिष्टुब्जगतीविराड्गार्हपत्यदक्षिणाग्न्याहवनीयसंवर्तकात्मकः प्रणवस्तस्मिन्नृसिंहव्यूहे विश्वरूपन्यायेनावस्थित उपास्यः । नन्वनेक एव लीलाविग्रहाः कथं न भवन्ति । नेति ब्रूमः । यस्तस्मा इत्येकवचनादेक एवायं लीलाविग्रह इत्यवगम्यते ॥ १ ॥

१ ग. घ. °त्यः सा प्र° । २ ग. ङ. च. विष्णुरु° । ३ ग. च. °भिः सा द्वि° । ४ ग. छ. °द्रादि° । ५ ग. च. °यः सा तृती° । ६ घ. °र. साऽथ° । ७ ङ. स ।

अष्टाक्षरः प्रथमः पादो भवत्यष्टाक्षरास्त्रयः पादा भवन्त्येवं द्वात्रिंशदक्षराणि संपद्यन्ते द्वात्रिंशदक्षरा वा अनुष्टुब्भवत्यनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतं तस्य हि पञ्चाङ्गानि भवन्ति चत्वारः पादाश्चत्वार्यङ्गानि भवन्ति सप्रणवं सर्वं पञ्चमं भवति। ॐ हृदयाय नमः। ॐ शिरसे स्वाहा। ॐ शिखायै वषट्। ॐ कवचाय हुम्। ॐ अस्त्राय फडिति प्रथमं प्रथमेन

एवं तावत्पुरश्चरणान्तर्गतप्रणवमात्राव्यूहोपासनमभिधायेदानीं सामाभिव्यक्तमूलमन्त्रेण ब्रह्मोपासनामभिधातुं मूलमन्त्रस्य प्रणवसंपुटीकरणादक्षरसंख्याविवृद्धेः कथं द्वात्रिंशदक्षरं सामेत्याशङ्क्य पादशः पञ्चाङ्गन्यासं चाभिधातुं पादाक्षरसंख्यापूर्विकां कृत्स्नमूलमन्त्राक्षरसंख्यामाह—अष्टाक्षरः प्रथमः पादो भवतीत्यादि सप्रणवं सर्वं पञ्चमं भवतीत्यन्तं स्पष्टार्थम्। ॐ हृदयेत्याद्यङ्गमन्त्राणां पञ्चानां सामाङ्गमन्त्रैरेव व्याख्यातत्वान्न पृथग्व्याख्यापेक्षेति। हृदयेत्यादि पञ्चमेनेत्यन्तं स्पष्टार्थम्। व्यतिषक्ता वेमे लोकास्तस्माद्व्यतिषक्तान्यङ्गानि भवन्तीति लोकबुद्ध्योपास्यानां हृदयाद्यङ्गानां सामाभिव्यक्तमूलमन्त्रप्रतिपाद्ये नृसिंहब्रह्मव्यूहे क्षीरोदार्णवशायिन्युपविष्टे वा लोकव्यतिषङ्गहेतुकाङ्गव्यतिषक्तता विधीयते तस्माद्व्यतिषक्तान्यङ्गानि भवन्तीत्यत्र व्यतिषक्तानि यथायोग्यतयाऽन्योन्यं मिश्रितान्युपास्यानीत्यर्थः। ततश्चायमर्थः संपद्यते पारमेश्वरं हृदयाख्यमङ्गं पारमेश्वरशिरोङ्गादधःप्रदेशान्तस्थितं हृदयप्रदेशादारभ्योपास्यम्। अत एव सामाङ्गप्रणवव्याख्यानेन मूलमन्त्रहृदयाङ्गव्याख्यानावसरे पारमेश्वरं हृदयं व्याख्यातमितरथा तद्व्याख्यानमप्रस्तुतं स्यात्तस्मादङ्गव्यतिषङ्गविधानादेव तद्व्याख्यानं प्रस्तुतमिति सिद्धम्। यत एवं हृदयाङ्गोपासनैव तदन्तर्गतत्वान्नेत्रत्रयोपासनाऽत एव नेत्रत्रयाङ्गोपासना न पृथगभिहिता। एवमुत्तरत्रापि शिखाख्यमङ्गं पारमेश्वरं शिरोङ्गमूर्ध्नि च व्यतिषक्तं सामाङ्गलक्ष्मीनृसिंहयजुर्मन्त्रेण व्याख्यातमुपास्यम्। शिरश्च द्वितीयमङ्गं यथोक्तहृदये सामाङ्गसावित्रीमन्त्रेण व्याख्यातं पारमेश्वरं कवचम्। यथोक्तहृदयैकदेशे नाभेरूर्ध्वं ग्रीवातोऽधःपृष्ठप्रदेशव्यापिसामाङ्गनृसिंहगायत्र्यां व्याख्या-

युज्यते द्वितीयं द्वितीयेन तृतीयं तृतीयेन चतुर्थं चतुर्थेन पञ्चमं पञ्चमेन व्यतिषक्ता वा इमे लोकास्तस्माद्व्यतिषक्तान्यङ्गानि भवन्त्यो-मित्येतदक्षरमिदं सर्वं तस्मात्प्रत्यक्षरमुभयत ओंकारो [1]भवतीत्यक्षराणां न्यासमुपदिशन्ति ब्रह्मवादिनः ॥ २ ॥ तस्य ह वा उग्रं प्रथमं स्थानं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति वीरं द्वितीयं स्थानं महाविष्णुं तृतीयं ज्वलन्तं चतुर्थं सर्वतोमुखं पञ्चमं नृसिंहं षष्ठं भीषणं सप्तमं भद्रमष्टमं मृत्युमृत्युं नवमं नमामि

---

तमुपास्यम् । एवं पञ्चममङ्गमस्त्राख्यमुत्तराधरभावेन तत्राभिमध्यवर्तिक्षीरोदा-र्णवपारमेश्वरव्यूहचतुष्टयाङ्गव्यापितया व्यवस्थितं व्यतिषक्तमुपास्यमिति यथा-योग्यतया व्यतिषक्तशब्दस्याङ्गेषु स्थितिः पञ्चाङ्गन्यासोपन्यासो न षष्ठमङ्ग-मिति तस्य हृदयान्तर्गतत्वादिति प्रागभिहितम् । सप्रणवे पञ्चमेऽङ्गे सप्रणवतां विधातुमाह । यस्मादोमित्येतदक्षरमिदं सर्वमिति यदिदमर्थजातमभिधानाभि-धेयभूतं तस्याभिधानाव्यतिरेकादभिधानभेदस्य चोंकाराव्यतिरेकादोंकार एवेदं सर्वं तस्मात्प्रत्यक्षरमुभयत ओंकारो भवति प्रत्यक्षरमेकैकं मूलमन्त्राक्षरं प्रणवेन संपुटितं कुर्यादित्यक्षराणां मूलमन्त्राक्षराणां न्यासमस्त्राख्येऽङ्गे उपदिशन्ति कथयन्ति ब्रह्मवादिनो ब्रह्मैवोपास्यतया ये वदन्ति ते ब्रह्मवादिनः । अत्र चोपदिशन्तीति विशेषणोपादानान्मूलमन्त्राङ्गजातमुपदेशगम्यमिति दर्श-यति । तमिमं पञ्चाङ्गन्यासं यथोक्तविशेषणे परमेश्वरे यथोक्तविशेष-णविशिष्टं विधाय स्वात्मन्यपि विदध्यात् । अस्मिन्हि प्रकरणे तस्यार्थ-जातस्य प्रायशः परमेश्वरसंबन्धितया श्रुतत्वादिति ॥ २ ॥

एवं तावत्प्राक्प्रत्यक्षरमुभयत ओंकारो भवतीति विधानात्सामाभिव्यक्तमू-लमन्त्राक्षरव्यवधानेनार्थाप्रतिपादन औपाधिकेन पदाज्ञानेन प्राप्ते तदव्यवधा-नेनार्थप्रतिपादनोपाधिना गूढेन पदपरिमाणं ज्ञापयितुं पदोद्धारमाह—तस्य ह वा इत्यादि सर्वमुपसंहृतमित्यन्तं स्पष्टार्थम् । स्थानं जानीयात्पदं जानीयात् ।

---

[1] छ. 'र्वति प्रल' ।

**दशममहमित्येकादशं स्थानं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । एकादशपदा वा अनुष्टुब्भवत्यनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतं तस्मात्सर्वमिदमानुष्टुभं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ३ ॥**

एकादशपदा वा अनुष्टुब्भवतीत्युपसंहारात्प्राक्तनः सर्वोऽपि स्थानशब्दः पादे वर्तते । यस्मादभिधानाभिधेयप्रपञ्चस्याभिधानाव्यतिरेको वाचारम्भणं विकारो नामधेयमिति श्रुतेर्नामप्रपञ्चस्य सामान्यविशेषात्मकस्यानुष्टुप्त्वे नामाव्यतिरेकादनुष्टुभश्चाऽऽद्यब्रह्मविवर्तात्मकत्वात्साकारब्रह्मप्रतिपादकत्वेन ब्रह्मत्वे सिद्धे ब्रह्मणश्च सृष्ट्युपसंहारकारणत्वेनोपादानादित्यनुष्टुबेवोपादानं तस्मात्सर्वमानुष्टुभमित्यादि गच्छतीत्यन्तं स्पष्टार्थं व्याख्येयमुक्तार्थम् ॥ ३ ॥

यदर्थप्रतिपादकगूढोपाधिना पदज्ञानमभूत्तमेव गूढोपाधिं विवृणोति प्रश्नोत्तराभ्याम् । स चात्र बहुतरो व्याख्येयः साङ्गसामाभिव्यक्तसाङ्गमूलमन्त्रं प्रतिपाद्य । स च मूलमन्त्रः पदत्रयात्मकः प्रथमः पादः पदद्वयात्मको द्वितीयः पदत्रयात्मकस्तृतीयस्तत्संख्याकपद एव चतुर्थ इत्येकादशपदात्मक एवमेकादशपदात्मके मन्त्रे पञ्चाङ्गन्यासानन्तरमुक्ते मन्त्रे द्वितीयान्तेषु नवसु पदेषु मन्त्रान्त्यं पदद्वयं तृतीयपादाद्यं च पदमपि त्रितयमप्यधस्तनेषूपरितनेषु च तृतीयपादाद्यपदादन्यत्रानुषज्यते तृतीयपादाद्यपदे द्वितयमनुषज्यत एवं क्रियाकारकाद्यन्वयसंबन्धशुद्धिः । तत्र पञ्चाङ्गन्यासानन्तरं पठितत्वात्पदोद्धारतदर्थकथनस्य सर्वेष्वेव पादेषु साङ्गेष्वर्थः कथनीय इत्याद्ये पादे पदत्रयात्मके साङ्गे लोकाद्यग्न्यादिना सामोपनिषद्युपास्ये सामाङ्गप्रणवेन च मूलमन्त्रहृदयाङ्गव्याख्याने प्राप्ते तत्रैकैकं पदं बहुतरेष्वर्थेषु व्याख्येयं तथोपरितनऋचो दशपदसंबन्धिन्यः प्रश्नोत्तरान्तरालवर्तिब्राह्मणवर्तिन्यस्तद्देषाऽभ्युक्तेत्येवं ब्राह्मणोक्तार्थे साक्षित्वेनानुभाविता महाचक्रे न्यस्ते द्वात्रिंशद्व्यूहनृसिंहात्मके ब्रह्मण्येकैकमूलमन्त्रपदव्याख्यानपरत्वेन वर्णनीयाः । तथा ब्राह्मणमेकैकमूलमन्त्रपदव्याख्यापरत्वेन महाचक्रनाभिवर्तिक्षीरोदार्णवसंबन्धिमूलनृसिंहव्यूहे ब्रह्मणि प्रागुक्तगुणविशिष्टे व्याख्येयमत एव तत्र साक्षित्वेनानुद्भावनमृग्[illegible]स्तत्तत्पदव्याख्यानावसरे विभागं क्रमं च स्पष्टं प्रदर्शयिष्यामः । तत्र तावदेकैकं पदं धातूपसर्गादियोगेन बहुतरमर्थजातं कथं वदिष्यति प्रजापतिः कथं व्याख्यास्यत्यस्मा-

देवा ह वै प्रजापतिमब्रुवन्नथ कस्मादुच्यत उग्रमिति स होवाच प्रजापतिर्यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतान्युद्गृह्णात्यजस्रं सृजति विसृजति विवासयत्युद्ग्राह्यत उद्गृह्यते । स्तुहि श्रुतं गर्तसदं युवानं मृगं नभीममुपहत्नुमुग्रम् ।

---

न्व्युत्पन्नान्प्रतीत्येवं देवा विस्मयेन ह हर्षिता वै प्रजापतिमब्रुवन्निति सर्वपदसाधारणं व्याख्यामं पृष्ट्वाऽनन्तरं कस्मात्प्रकृतिप्रत्ययविभागादनाख्यातात्मकं प्रथमपदमुच्यते व्याख्यायत उभयत्रापि मूलनृसिंहव्यूहे द्वात्रिंशन्नृसिंहव्यूहे चोग्रमिति । इतिशब्दः प्रश्नसमाप्तिं द्योतयति । स प्रजापतिस्तान्देवान्परमेश्वरोपासनानिष्ठान्विवक्षितार्थप्रष्टृन्दृष्ट्वोत्तरमुवाच । एवमुत्तरोत्तरप्रश्नोत्तरेष्वपि योज्यम् । यस्मात्स्वमहिम्ना स्वतन्त्रशक्त्या मायया तस्या आत्मतन्त्रत्वादेव स्वातन्त्र्यम् । स्वमहिम्नेति च वचनं सर्वशक्तिमत्तृतीयपादाद्यपदानुषङ्गं दर्शयति । एवं तत्तत्पदव्याख्यानावसरे सर्वाँल्लोकान्पृथिव्यादीन्पार्थिवत्वावान्तरजातिभेदभिन्नान्सर्वान्देवानग्न्यादीन्सप्रणवव्याख्यानपक्ष ऋग्ब्रह्मादिगार्हपत्यान्तान्प्रणवप्रथममात्राप्रतिपादितान्सर्वात्मनो विश्वादीन्प्रणवव्याख्यानेन वक्ष्यमाणान्सर्वाणि भूतान्युद्गृह्णाति । उदित्ययमुपसर्ग उ इत्येतस्य निपातस्य स्थाने वर्णसाम्यादन्वित्युपसर्गस्यार्थग्रह इत्ययं गृह्णातीति भावव्युत्पत्त्याऽनुगृह्णातीत्यर्थः । अजस्रमनवरतं तथाचोत्पूर्वको गृह्णातीतिशब्दः सृष्टिविमोचनवसतिषु वर्तते । उद्ग्राह्यत उद्गृह्यत इत्यात्मनेपदात्प्रयोजककर्तृत्वं साक्षात्कर्तृत्वं चेत्युक्तमेवार्थं द्रढयति । ततश्चायमर्थः । पूर्वोक्तार्थानुग्राहकत्वं स्रष्टृत्वं च विपूर्वकस्य सृजतेरुपसंहारार्थत्वेन तदर्थत्वं विमोचनार्थत्वं वाऽवस्थितिकारयितृत्वमनुग्रहे प्रयोजकत्वमिति मूलनृसिंहव्यूहहृदयान्तर्वर्तित्वेनोपास्यम् । एवं मूलनृसिंहगूढहृदयोपासापरत्वेनोग्रपदं व्याख्यायाथेदानीं तदेव पदं द्वात्रिंशद्व्यूहोपासनापरत्वेन व्याख्यातुमृचमाह । स्तुहीति स्तोतारं प्रत्यक्षीकृत्याऽऽह परोक्षीकृत्य स्तुत्यम् । यो वै नृसिंह इत्यादिमन्त्रवर्णैरेव स्तुतं द्वात्रिंशन्नृसिंहव्यूहं गर्तसदं गर्ते महाचक्रे गृणातेः स्तुतिकर्मणो गीर्यत इति व्युत्पत्त्या सीदतीति गर्तसदम् । युवानं प्रसिद्धम् । मृगं सिंहरूपम् । नभीममभयंकरमुपहत्नुमनुग्रहार्थं सर्वत्रोपगमशीलम् । उग्रं द्वात्रिंशन्नृसिंहव्यूहरूपम् । अत्रापि सशक्तिकनृसिंहपदस्यानुषङ्गः । स्तुहीत्येवं संबन्धः । एवं परोक्षतः स्तुते द्वात्रिंश-

मृडा जरित्रे सिंह स्तवानो अन्यं ते अस्मान्निवपन्तु सेनाः। तस्मादुच्यत उग्रमिति। अथ कस्मादुच्यते वीरमिति यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि विरमति विरामयत्यजस्रं सृजति विसृजति वासयति। यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः।

नृसिंहव्यूहे तत्सामर्थ्याद्दूरश्रवणयुक्तत्वाच्च तच्छ्रुत्वा प्रत्यक्षो ह्यभूत्स व्यूह उपासकायेति प्रत्यक्षीकृत्वाऽयमुत्तरार्धः। हे सिंह द्वात्रिंशद्व्यूह स्तवानस्तूयमानस्त्वं मृड सुखय जरित्रे स्तोत्रकर्त्रे। यद्वा चतुर्थी द्वितीयार्थे। ते तव सेना अस्मदस्मत्तोऽन्यं निवपन्तु विनाशयन्तु। यद्वा स्वानुग्रहं लब्ध्वा परानुग्रहं प्रार्थयते। ते तव सेनास्तद्व्यूहरूपा अस्मदन्यं निपूर्वको वपतिरनुग्रहार्थे वर्ततेऽनुगृह्णन्त्वित्यर्थः। यस्मादेवं प्रागुक्तेन प्रकारेणोभयोपास्य उग्रपदं क्षमं तस्मादुच्यत उग्रमिति। इतिशब्द उत्तरसमाप्तिं द्योतयति। एवं प्रथमपदमुभयोपासने क्षममिति विज्ञायाथेदानीं द्वितीयं पदमक्षयोपास्ये व्याख्यातुं द्वितीयो देवप्रश्नः स च प्रथमदेवप्रश्नेन व्याख्यातः। अथ कस्मादुच्यते वीरमिति स होवाच प्रजापतिरिति प्रागुक्तमनुषज्योत्तरम्। यस्मात्स्वमहिम्नेत्यादि सर्वाणि भूतानीत्यन्तमुक्तार्थम्। विरमति विरामयति विविधप्रकारेण प्रागुक्तान्प्रति रमति। रम क्रीडायाम्। तथैव तानाक्रीडयति। कथं क्रीडयतीत्यपेक्षित आह—अजस्रमित्यादि वासयतीत्यन्तमुक्तार्थम्। एतदुक्तं भवति। सृष्टिस्थितिलयविमोचनकर्तृत्वरूपाः क्रीडा अतः प्रागुक्तार्थमूलनृसिंहव्यूहहृदयं क्रीडासक्तमुपास्यम्। एवं मूलनृसिंहोपासनापरत्वेन द्वितीयं पदं व्याख्याय द्वात्रिंशन्नृसिंहव्यूहोपासनायां तदेव पदं व्याख्यातुमर्धर्चमाह। देवकामस्तांस्तान्ब्रह्मादिदेवान्स्वेन रूपेणावतारयितुं कामयत इति देवकामः। यद्वा नृसिंहव्यूहमेव धृत्वा ब्रह्मादिरूपं प्रकटयति क्वचिदायुधैः क्वचिद्विश्वरूपोपपत्तिन्यायेन। यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मेत्यादिषु यो वै नृसिंहो देवो भगवान्ये चाष्टौ वसव इत्यादिषु च पदेष्वेवं देवकामो जायते यतो वीरः शूरो यद्वा वीरो विविधावताररूपेण रमणीयसंसारशीलो वीरः कर्मण्यस्तत्तदवतरणरूपकर्मशील उपासकानुग्रहणे। सुदक्षः पूजितबलः। यद्वा पूजितः। युक्तग्रावा युक्तो ग्रावभिर्युक्तग्रावा सोमेऽध्वर्य्वादिरूपो यो वै नृसिंहो देवो

तस्मादुच्यते वीरमिति । अथ कस्मादुच्यते महाविष्णुमिति यः सर्वांल्लोँकान्व्याप्नोति व्यापयति स्नेहो यथा पललपिण्डमोतप्रोतमनुप्राप्तं व्यतिषक्तो व्याप्यते व्यापयते । यस्मान्न जातः परोऽन्योऽस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशीति ।

भगवान्यश्च सर्वमित्यादिमन्त्रवर्णात् । यस्मादुक्तप्रकारेणोभयोपास्ये वीरपदं क्षमं तस्मादुच्यते वीरमिति । इतिशब्द उत्तरसमाप्तिं द्योतयति । अथेदानीं तृतीयपदं व्याख्यातुं देवप्रश्नः स चोक्तार्थः । सर्वत्र प्रश्नवाक्येष्वथशब्दस्तत्तदानन्तर्यार्थः । अथ कस्मादुच्यते महाविष्णुम् । इतिशब्दोऽनुषक्तप्रश्नसमाप्तिं द्योतयति । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । य इत्यत्रापि स्वमहिम्नेत्यनुषङ्गाच्छक्तिमन्नृसिंहपदस्यानुषङ्गः । सर्वांल्लोँकान्व्याप्नोति व्यापयतीत्यत्र सर्वलोकपदादेवाऽऽत्मभूतानां संग्रहः प्राग्वद्धक्रमत्वेनावगतानां तदादिन्यायेन । विष्णुरिति विषॢ व्याप्ताविति धातो रूपम् । तच्च व्यापकत्वं निरुपपदत्वेन महत्त्वं प्राप्तमिति महच्छब्देन तदेव दृढीकृतम् । यद्वा मह इति तेजो नाम महो व्यापकम् । व्यापकत्वे दृष्टान्तमाह—स्नेहस्तैलादिर्यथा पललपिण्डं पललस्य पिण्डं पललपिण्डम् । ओतमनुस्यूतं प्रोतं प्रकर्षेणानुस्युतमनुषक्तं तादृशं पिण्डं व्यतिषक्तोऽवयवसंभिन्नो व्याप्यते व्यापयते । दृष्टान्त आत्मनेपदोपादानाद्व्याप्नोति व्यापयतीति दार्ष्टान्तिके च परस्मैपदोपादानादुभयपद्ययं धातुरिति दर्शयति । एतदुक्तं भवति । प्रागुक्तसर्वलोकादिसाक्षाद्व्यापकत्वं प्रयोजकव्यापकत्वं च मूलनृसिंहहृदय उपास्यमिति । एवं तावत्साङ्गमूलनृसिंहव्यूहोपासनापरत्वेन महाविष्णुपदं तृतीयं व्याख्यायाथेदानीं तदेव पदं द्वात्रिंशन्नृसिंहव्यूहोपास्यपरत्वेन व्याख्यातुमृचमाह—यस्माद्द्वात्रिंशन्नृसिंहव्यूहात्पर उत्कृष्टो न जातो जातोऽन्यो नास्ति सर्वस्यैवान्तर्भावाद्यो व्यूहः स विश्वा सर्वाणि भुवनानि भूतान्याविवेश प्रविष्टः । व्याप्तुस्तत्सद्रूपधारणेन विश्वरूपावतारणेनाऽऽविर्भवत्याविर्भूत्या वा प्रजया सह प्रजापतिरपि संविदानो जानंस्तमुपास्यतया त्रीणि ज्योतींषि गार्हपत्यादीन्सचते सेवते । स प्रजापतिरुपासनां कुर्वन्षोडशी

तस्मादुच्यते महाविष्णुमिति ।
अथ कस्मादुच्यते ज्वलन्तमिति[1] ।

कला निराकारब्रह्मतया बभूव । तस्य चाऽऽद्यस्योपासकस्य प्रजापतेरन्यस्य चोपासकस्यायमुपासनाक्रमः । अत्र च प्रकरणे महाचक्रनाभिवर्तिक्षीरोदार्णवसंबन्ध्युपास्यो मूलनृसिंहव्यूह इति पूर्वाचार्याणां परिभाषा संप्रदायागता । तत्र च प्रणवपूर्वकशक्तिबीजोच्चारणपूर्वकं सामाभिव्यक्तद्वात्रिंशदक्षरेषु न्यस्तेषु चक्रे यथासंख्यमेकैकस्मिन्नक्षरे प्रणवसंपुटिते तत्तद्व्यूहमन्त्रैस्तं तं व्यूहं स्तुत्वा तथैवोपास्यैवं द्वात्रिंशन्नृसिंहव्यूहोपासनया स्वात्मानं महाविष्णुमुपास्य साङ्गसामाभिव्यक्तसाङ्गमूलमन्त्रेण नृसिंहव्यूहे प्रकरणे श्रुतत्वात्पञ्चाङ्गन्यासं विधाय संप्रदायानुसारेण तस्मिन्महाविष्णौ तथैव पञ्चाङ्गन्यासं विधाय ततः साङ्गोपासनमारभेत । तत्र प्रथमपादे पदत्रयात्मके प्रथमपदव्याख्यानप्रतिपादितगुणविशिष्टं शक्तिमन्नृसिंहपदपूर्वकं नमस्क्रियापदपूर्वकं सामाङ्गप्रणवमन्त्रव्याख्यानहृदयमन्त्रगुणविशिष्टं मूलनृसिंहव्यूहमुपास्य द्वात्रिंशन्नृसिंहव्यूहमृक्प्रतिपादितमुपासीत । एवं प्रतिपदं मूलनृसिंहव्यूहोपासनपूर्वकं द्वात्रिंशन्नृसिंहव्यूहोपासनम् । अत एव हृदयाद्यङ्गमन्त्राणामर्थं व्याचक्षाणैरस्माभिरुक्तं प्रपञ्चागमशास्त्रे—

"हृदयं बुद्धिगम्यत्वात्प्रणामः स्यान्नमःपदम् ।
क्रियते हृदये नमो बुद्धिगम्या नमस्क्रिया" इति ।

एवं द्वितीयतृतीयचतुर्थपादेषु तत्तत्पदोपासनां प्रागुक्तां कृत्स्नां विधाय महाविष्णुरूपेऽन्त्यसामप्रतिपादितरूपे वोपास्यरूपे वा सायुज्यतया सच्चिदानन्दरूपे वाऽथवा यथान्तःकरणशुद्धियोग्यतया समाधिना वा तिष्ठेतोपासकः । आद्यद्वितीयोपासनयोः साममूलमन्त्रप्रणवानां वैकल्पिकजपपूर्वकत्वेनावस्थानम् । तथा यत्र यत्र मूलमन्त्रस्मृतिस्तत्र तत्र प्रणवशाक्ते बीजसंपुटीकरणेन तत्रापीषन्मूलमन्त्रजपपूर्वकः प्रणवजपः श्रेयान् । तस्य सर्वोत्कृष्टत्वात्सर्वमन्त्रजपप्रत्याम्नायत्वेन विहितत्वाद्यः प्रणवमधीते स सर्वमधीत इति श्रुतेः । अन्त्ययोरुपासनयोरन्त्यसामिति(?) राकारयोरवस्थितौ न जपो नान्यचिन्तनं समाधावेवावस्थितिरिति परमरहस्यविवेको न कस्यचित्प्रतिपादनीय इति स्थितम् । यस्मादिदं महाविष्णुपदमुभयोपास्यप्रतिपादनक्षमं तस्मादुच्यते महाविष्णुमिति । इतिशब्दो व्याख्यातः । एवं प्रथमपादः । एवं प्रथमपादोपासनां विधातुं तदाद्यपदं मन्त्रापेक्षया चतुर्थं च पदं व्याख्यातुं प्रश्नोपक्रमः स चोक्तार्थः । अथ कस्मादुच्यते ज्वलन्तमिति । इतिशब्दो व्याख्यातः । स होवाच प्रजापतिरि-

१ छ. 'ति यः स्वम' ।

**यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि स्वतेजसा ज्वलति ज्वालयति ज्वाल्यते ज्वालयते । सविता प्रसविता दीप्तो दीपयन्दीप्यमानः । ज्वलञ्ज्वलिता तपन्वितपन्संतपन्रोचनो रोचमानः शोभनः शोभमानः कल्याणः ।**

त्यनुषज्योत्तरम् । यः स्वमहिम्ना स्वाधीनमायया सर्वाँल्लोकानन्तरिक्षगतान्पूर्वोक्तान्भाविनश्च तदन्तर्गतान्सर्वान्देवान्यक्षगन्धर्वादीन्सर्वानात्मन ऋग्यजुःसामाथर्वरूपान्पुरुषानन्यानृषीन्सामाङ्गसावित्रमन्त्रव्याख्यातांश्च सर्वाणि भूतान्येतान्पूर्वोक्तान्वक्ष्यमाणांश्च स्वतेजसा ज्वलति स्वकीयप्रकाशेनैतानपि प्रकाशयति । शिरोन्तर्गततेजो व्याख्यातम् । सर्वाङ्गाङ्गिव्यापिताया‌ङ्गा(?)नामन्योन्यसंबन्धश्रवणात्तस्माद्यतिपक्तान्यङ्गानि भवन्तीति श्रुतेः । ज्वलयतीत्येतान्प्रकाशयतीत्यर्थः । एवं साक्षात्प्रयोजकत्वेन च स्वरसंबन्धितया शिरोङ्गान्तर्गततेजःसंबन्धे सिद्धेऽप्येतदेव वेदयितुमुभयपदित्वेन धातुं प्रयुङ्क्ते प्राक्परस्मैपदमिदानीमात्मनेपदं ज्वाल्यते ज्वालयत इति । एवं मूलनृसिंहव्यूहोपास्ये चतुर्थं पदं व्याख्याय द्वात्रिंशन्नृसिंहव्यूहे व्याख्यातुमृचमाह । सविता सवितृमण्डलतद्वर्तुलतया स्थितत्वात्सविताऽयं व्यूहोऽत एव प्रसविता सर्वकर्मानुष्ठानेऽभ्यनुज्ञाततद्व्यूहोपासनपूर्वकत्वादितरोपासनस्य दीप्तो दीपयन्दीप्यमानो यथाऽयं सविता रात्रितमोविनाशनेन दीप्तः प्रकाशमानः कर्मानुष्ठानेऽभ्यनुज्ञाता तथाऽयं द्वात्रिंशन्नृसिंहव्यूह उपासित उपासकाय मूलनृसिंहव्यूहोपासनाज्ञानरात्रितमोविनाशनेन दीप्तः प्रकाशमानः प्रधानोपासनाभ्यनुज्ञाता । दीपयन्दीप्यमान इति शतृशानच्प्रत्ययौ वर्तमानकालार्थावुक्तमेवार्थं द्रढयतः । ज्वलञ्ज्वलिता प्रकाशं कुर्वन्प्रकाशयिता । यद्वोभयत्रापि ज्वलञ्शब्दो दहनार्थे वर्तमानोऽप्यज्ञानदाहकत्वेन व्याख्येयः । तत्र लोकाद्यज्ञानस्य प्रकाशवत्त्वाद्दाहकः प्रकृते चोपासकाज्ञानदाहक इति । ज्वलन्प्रकाशनेनाज्ञानदहनं कुर्वञ्ज्वलिताज्ञानदहनकर्ता तपंस्तापं कुर्वन्नज्ञानस्य वितपन्स्वयं शान्तः संतपन्संतापं कुर्वन्नज्ञानस्य । एते शतृप्रत्यया वर्तमानकालाः सन्तो यस्मिन्काल एतद्व्यूहोपासनं वर्तते तस्मिन्नेव महाविष्णुरुपासकः प्रकाशात्मकोऽधिकारी वर्तत इति दर्शयन्ति । रोचनोऽनुद्वेगकरो रोचमान इच्छाकरोऽत एव शोभनः शोभमानः कल्याण इति । एतदुक्तं भवति । मूलनृसिंहव्यूहस्य शिरोङ्ग उन्नते स्थितं तेजः सर्वप्रकाशकं सर्वाज्ञानदाहकं चेति

तस्मादुच्यते ज्वलन्तमिति। अथ कस्मादुच्यते सर्वतोमुखमिति यस्मादनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते स सर्वगः सर्वतस्तिष्ठति । एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः। यमप्येति भुवनं सांपराये नमामि तमहं सर्वतोमुखम् । तस्मादुच्यते सर्वतोमुखमिति ।

---

सामाङ्गसवितृमन्त्रेण व्याख्यातमुपास्यमिति यस्मादुभयोपास्यप्रतिपादनक्षमं ज्वलन्तमिति पदं तस्मादुभयोपास्यपरत्वेनोपसंहरति तस्मादुच्यते ज्वलन्तमिति। इतिशब्दो व्याख्यातः। अथेदानीं क्रमप्राप्तं मूलमन्त्रापेक्षया पञ्चमं पदं पादापेक्षया द्वितीयमुभयोपास्ये व्याख्यातुं देवप्रश्नोऽथ कस्मादुच्यते सर्वतोमुखमिति स चोक्तार्थः। स होवाच प्रजापतिरित्यनुषज्योत्तरम् । यस्मात्स्वमहिम्नेत्यनुषज्य व्याख्येयम्। अनिन्द्रियोऽपीति सेन्द्रियस्य व्याख्यातविग्रहस्य तदभिमानराहित्यादनिन्द्रियोऽप्ययं मूलनृसिंहव्यूहः सर्वतः पश्यति सर्वतः शृणोतीति बुद्धीन्द्रियोपलक्षणं सर्वतो गच्छति सर्वत आदत्ते सर्वगः सर्वतस्तिष्ठतीति कर्मेन्द्रियोपलक्षणमेवमुभयेन्द्रियाभिमानरहितोऽप्ययं व्यूह उभयेन्द्रियजन्यकार्यकरणशक्तिमाञ्शिरोऽङ्ग उपास्य इति दर्शयति। एवमिदं सर्वतोमुखपदं मूलनृसिंहोपास्यपरत्वेन व्याख्यायाथेदानीं द्वात्रिंशन्नृसिंहोपासनापरत्वेन व्याचष्टे। एकः पुरस्तात्प्राग्ब्रह्मा नृसिंहावतारो बभूवेदं सर्वं यतो बभूव भुवनस्य गोपा गोप्ताऽपीदानीं नृसिंह एव विष्णुर्बभूव। यमप्येति लयं गच्छति सांपराये प्रलयकाले भुवनं सर्वं स एव महेश्वरो बभूवेति बद्धक्रमकाणां व्यूहानां त्रयाणां प्रथमत एवोपादानेन तदादिन्यायेनेतरेषामेकोनत्रिंशद्व्यूहानां ग्रहणमस्मिन्मन्त्रे। नमामि नमस्करोमि तं व्यूहमहं नमामीत्येतत्पदद्वयमत्र वदन्सर्वपदव्याख्यानेऽनुषक्तमिति दर्शयति। स्वमहिम्नेत्युपादानात्तत्र तत्र शक्तिमन्नृसिंहपदमप्येतदनुषक्तम्। सर्वतोमुखमिति सर्वतो नृसिंहाकाराणि मुखानि यस्य स तथोक्तस्तं नृसिंहं सर्वतोमुखं नमाम्यहमित्यर्थः। यस्मादिदं पदमुभयप्रतिपादने शक्तं तदुभयप्रतिपादकत्वेन तस्मादित्युपसंहरति तस्मादुच्यते सर्वतोमुखमिति। एतदुक्तं

---

१ क. 'स्मात्स्वयमनि'। २ ग. 'दतीन्द्रि'। ३ छ. 'ति। य ए'।

अथ कस्मादुच्यते नृसिंहमिति यस्मात्सर्वेषां
भूतानां ना वीर्यतमः श्रेष्ठतमश्च सिंहो वीर्य-
तमः श्रेष्ठतमश्च तस्मान्नृसिंह आसीत्परमे-
श्वरो जगद्धितं वा एतद्रूपमक्षरं भवति ।

भवति । द्वितीयपादे शिरोङ्गविशिष्टप्रतिपादितसर्वप्रकाशकत्वसर्वाज्ञानदाहकत्वो-भयेन्द्रियकार्यकरणशक्तिगुणविशिष्टः सामाङ्गसवितृमन्त्रव्याख्यातगुणविशिष्टो मूलनृसिंहव्यूह उपास्यस्तत इतरो व्यूह इति । एवमाद्यादङ्गादुन्नतप्रदेशास्थितत्वा-च्छिरसः शिरस्त्वम् । अत एव शिर आदित्यः सर्वोत्कृष्टः प्रकाशस्तस्मा उन्नतायो-न्नतस्थाय सर्वोत्कृष्टप्रकाशाय स्वाहेति प्रपञ्चस्तस्य तस्मात्प्रपञ्चाकारात्तदाकारां बुद्धिं प्रत्याहृत्य नृसिंहाकारमेवोपासीतेत्येवं शिरोङ्गमन्त्रस्यार्थः । यो वै नृसिंहो देवो भगवान्यश्च सर्वमिति श्रुतेः । अत एवोक्तं शिरोङ्गमन्त्रार्थं व्याचक्षाणैर-स्माभिः प्रपञ्चागमशास्त्रे—

> "तुङ्गार्थत्वाच्छिरोङ्गस्य विषयाहरणे न्विपः ।
> शिरोमन्त्रेण चोत्तुङ्गविषयाहृतिरीरिता" इति ॥

एवं द्वितीये पादे साङ्गोपासनामभिधाय तृतीयपादोपासनामभिधातुं तदाद्यं पदं षष्ठं च मूलमन्त्रापेक्षयोक्तोपास्यं व्याख्यातुं देवप्रश्नोऽथ कस्मादुच्यते नृसिं-हमिति स चोक्तार्थः । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । अत्र च यस्मा-च्छब्दप्रयोगात्स्वमहिम्नेत्यस्यानुषङ्गं दर्शयति । यस्मात्सर्वेषां भूतानां मध्ये ना पुरुषाकारो वीर्यवत्तमस्ततः सर्वातिशायिनः श्रेष्ठतमश्च सिंहो वीर्यवत्तमः श्रेष्ठत-मश्चेत्युक्तार्थम् । ततश्चोभयात्मरूपप्रदर्शनेन यद्यद्रूपं कामयेऽहं तत्तद्द्वारेण लीलयैव शक्तोऽहमिति दर्शयति । यस्मादेवं तस्मान्नृसिंहः परमेश्वर आसी-दित्यन्वयः । न च नृसिंहे परमेश्वर आसीदित्यन्वयः । वैयधि-करण्यापत्तेः । सामानाधिकरण्यान्वयोपपत्तौ सत्यां वैयधिकरण्यानुपपत्तेः । तस्मान्नृसिंहः परमेश्वरस्त्रिनेत्रो नीलकण्ठः पिनाकीति सिद्धम् । ऋतं सत्यमिति प्राग्व्याख्यातं मन्त्रवर्णाच्चोक्तं जगद्धितं जगतो हितं जगद्धितमनिष्टनिरसनेन वै प्रसिद्धमेतद्रूपं प्रागुपास्यत्वेन यदुक्तमक्षरं भवति यदक्षरमविनाशं चिद्रूपं निरा-कारं तदेव साकारमुपासकानुग्रहाय भवतीत्यन्वयः । एवं नृसिंहपदं षष्ठं मूल-नृसिंहव्यूहोपास्यं व्याख्याय तदेव पदमृचा द्वात्रिंशन्नृसिंहव्यूहे व्याचष्टे ।

---

१ क. छ. नां वा ।

प्र तद्विष्णुः स्तवते वीर्याय मृगो नभीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा। तस्मादुच्यते नृसिंहमिति। अथ कस्मादुच्यते भीषणमिति यस्माद्यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि भीत्या पलायन्ते स्वयं यतः कुतश्चिन्न बिभेति। भीषाऽस्माद्वातः पवते

विष्णुर्मृगः सिंहः प्रस्तवते स्तुतिं प्राप्नोति स्तुतिमन्त्रैस्तद्वीर्याय तत्तत्सामर्थ्याय नभीमो नभयंकरः। कुचरः कुत्रायं न चरति सर्वदेवविग्रहेषु लीलया स्वयं विचरति सर्वदेवलीलाविग्रहधारीत्यर्थः। गिरिष्ठा गिरिः पर्वतस्तत्स्थ ईश्वरात्मक इत्यर्थः। यद्वा गिरिषु वाग्रूपासु स्तुतिषु यद्यद्रूपमभिलपन्स्तोता कामयते तत्तद्रूपं स्वस्मिन्स्थापयतीति गिरिष्ठाः। यस्य त्रिषु विक्रमणेषु विग्रहेषु विविधं क्रमणं विक्रमणं तेषु ब्रह्मविष्णुमहेश्वरात्मकेषु। अधीत्युपरिभावे। अध्युरुषु बहुलीलाविग्रहेषु। भुवनानि सर्वाणि क्षियन्ति निवसन्ति स्वभावतस्तानि ज्ञानपूर्वकाणि निवसन्ति विनिवसन्ति। एषु लीलाविग्रहेषु वयं तिष्ठाम इति। तर्हि क्षियतिरैश्वर्यकर्मैश्वर्यं प्राप्नुवन्तीत्येवं नानाविधविक्रमणावतरणे वीर्याय सामर्थ्याय तद्दर्शनाय विष्णुर्मृगः सिंहः प्रस्तवते प्रकर्षेण स्तुतिं लभत इत्यर्थः। एवमुभयोपास्ये नृसिंहपदं व्याख्यातं तस्मादित्युपसंहरति—तस्मादुच्यते नृसिंहमिति। एवमुभयोपेक्षयाऽऽद्यं षष्ठं नृसिंहपदमुभयोपास्ये व्याख्यायाथेदानीमुभयापेक्षया सप्तमं द्वितीयं च पदं व्याख्यातुं प्रश्नोऽथ कस्मादुच्यते भीषणमिति। स होवाच प्रजापतिरित्यनुषज्योत्तरम्। यस्माच्छब्दोपादानात्स्वमहिम्नेत्यनुषङ्गः। यस्मात्स्वमहिम्ना यस्य मूलनृसिंहव्यूहस्वरूपं साङ्गं शिखास्याङ्गयुक्तं मौलिप्रदेशे चान्द्रतेजोराशियुक्तं सामाङ्गयजुर्लक्ष्मीमन्त्रव्याख्यातं भूर्भुवःस्वर्महर्लोकचतुष्टयसंपिण्डिततेजोराशियुक्तमप्रधृष्यतेजोमयं रूपं दृष्ट्वा सर्वे देवास्तदङ्गद्युनिवासिनो वसुरुद्रादित्याः सर्वाणि भूतानीमानि भीत्या भयेन पलायन्ते पलायनं कुर्वन्ति स्वयं देवो यस्मात्कस्मादपि न बिभेति निरतिशयाभयगुणविशिष्ट उपास्यः। एवमुक्तोपास्ये भीषणपदं व्याख्याय तदेव पदं द्वितीये व्यूहे कृत्वा व्याचष्टे—भीषेत्यादि। भीषा भीत्याऽस्मान्मूलव्यूहाद्वातो वायुः पवते वाति। वातपदो-

१ ङ. °स्माद्भीषणं यस्य। २ ज. कामयेत।

भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः । तस्मादुच्यते भीषणमिति । अथ कस्मादुच्यते भद्रमिति[1] यस्मात्स्वयं भद्रो भूत्वा सर्वदा भद्रं ददाति रोचनो रोचमानः शोभनः शोभमानः कल्याणः । भद्रं कर्णेभिः

पादानात्पञ्चमहाभूतव्यूह उपलक्षितः । भीषोदेति सूर्य इति सोमसूर्यव्यूहावुपलक्षितौ । भीषाऽस्मादग्निश्चेत्याग्नेयो व्यूहः । इन्द्रश्चेति सर्वव्यूहः । मृत्युर्धावति पञ्चम इति मृत्युव्यूहः । तत्रास्यामृचि यद्यपि पञ्चानां व्यूहानामुपादानं तदादिन्यायेन सर्वसंकलनतया भियो दर्शनादादित्यादीनां स्वस्वरूपेण भयदर्शनमुखेन सर्वेषां ब्रह्मादीनां संग्रहणात्तदुभयभावरूपनृसिंहप्रवेशनेन वा प्रदर्शनेन तद्रूपधारणेन वोभयरूपतेति । तत्रैकैकस्य देवस्य तत्तद्रूपधारणेनोभयरूपं दर्शयन्बहूनां देवानां स्वान्तर्भावेनोभयरूपं प्रदर्शयति । इत्युभयरूपेण सर्वं द्वात्रिंशद्व्यूहं संगृह्णातीयमृगिति तत्त्वार्थः । एवमुभयोपास्ये भीषणपदं व्याख्यातं तस्मादित्युपसंहरति—तस्मादुच्यते भीषणमिति । एवमुक्तोपास्ये प्रागुक्तपदं व्याख्यायाथेदानीमुभयापेक्षया तृतीयमष्टमं च पदमुभयोपास्ये व्याख्यातुं देवप्रश्नोऽथ कस्मादुच्यते भद्रमिति । स होवाच प्रजापतिरित्यनुषज्योत्तरम् । यः स्वमहिम्नेत्यनुषङ्गः । स्वयं भद्रो भूत्वा भजनीयो माङ्गलिको भूत्वा सर्वदा भद्रं माङ्गलिकं ददाति । भद्रदातृस्वरूपं च मूलव्यूह उपास्यमिति दर्शयति । रोचनो दीप्तियुक्तः । रोचमानः शिखाङ्गेन रुचिं दीप्तिं कुर्वञ्शानच्प्रत्ययान्तत्वात् । तदङ्गं द्वितीयतेजोरूपादङ्गादधिकतरतेजोरूपमतश्च नानाभरणयुक्तमौलिगतं तेजस्तदन्तर्गतानां देवानां च स्वतेजसाऽभिभवतीत्येवमुपास्यम् । अत एवोक्तमस्माभिः शिखाङ्गमन्त्रं व्याचक्षाणैः प्रपञ्चागमशास्त्रे—

"शिखा तेजः समुद्दिष्टं वषडित्यङ्गमुच्यते ।
तत्तेजोऽस्य ततः प्रोक्ता शिखा मन्त्रेण मन्त्रिणः" ।

निरतिशयतेजोवयवः शिखेत्यर्थः । यस्य ज्ञानमयी शिखेति श्रुतेः । शोभनस्वरूपेण शोभमानः शिखाङ्गतेजसाऽत एव कल्याणो माङ्गलिकमूलनृसिंहव्यूहः । एवमुक्तोपास्येऽष्टमं पदं व्याख्यायाथेदानीं तेनैव पदेन द्वात्रिंशद्व्यूहमृचा व्याचष्टे—भद्रं कर्णेभिरिति । इयमृक्प्रारम्भे

१ क. ग. छ. ति यः स्वयं ।

शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः। तस्मादुच्यते भद्रमिति। अथ कस्मादुच्यते मृत्युमृत्युमिति। यस्मात्स्वमहिम्ना स्वभक्तानां स्मृत एव मृत्युमपमृत्युं च मारयति। य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य च्छायामृतं यो मृत्युमृत्युः कस्मै देवाय

शान्तिपाठे व्याख्याता। तनूभिरेवैभिस्तनूमन्त्रैरेव स्थिरैरङ्गैरिति विशेषः। पञ्चमाङ्गान्तर्भावाच्छ्रुतिमन्त्राणामेवोभयोपास्ये व्याख्यानं तस्मादित्युपसंहरति—तस्मादुच्यते भद्रमिति। इतिशब्दो व्याख्यातः। एवं तृतीयपादे तत्पदव्याख्यानेन साङ्गोपासनामभिधाय तथैव चतुर्थपादोपासनामभिधातुं तदाद्यपदं मूलमन्त्रापेक्षया नवमं च पदमुभयोपास्ये व्याख्यातुं देवप्रश्नोऽथ कस्मादुच्यते मृत्युमृत्युमिति। स होवाच प्रजापतिरित्यनुषज्योत्तरम्। यस्मात्स्वमहिम्नेत्यनुषङ्गः। स्वभक्तानां भज सेवायां स्वसेवकानामनन्यभावेन स्मृत एवोपासित एव मृत्युं साक्षात्कालप्राप्तमपमृत्युं चावान्तरप्राप्तं जातकर्मणि गणितशास्त्रनिर्णीतायुःपरिमाणात्तदन्तरा मृत्युरपमृत्युस्तं चानन्यभावेनोपासकानामप्रार्थित एव मारयति विनाशयतीत्येवंरूपः। कवचमङ्गमुपास्यं तस्य सामाङ्गमन्त्रेण नृसिंहगायत्र्या नृसिंहरूपेण व्याख्याततत्वात्स्वांस्तदुपासकान्स्वस्वरूपान्संपाद्य मृत्युं मारयतीत्यर्थः। यो वै नृसिंहो देवो भगवान्यश्च जीव इति मन्त्रवर्णात्। इदं प्रागुक्तं पदं मूलनृसिंहव्यूहोपास्यपरत्वेन व्याख्यायाथेदानीं तेनैव पदेन द्वात्रिंशद्व्यूहमृचा व्याचष्टे। यो द्वात्रिंशन्नृसिंहव्यूह आत्मदा आत्मानं ददातीत्यात्मदाः स्वस्वरूपदाता सर्वेषां देवानां स्वरूपमेव धारयतीत्यर्थः। बलदाः सामर्थ्यदाता स्वोपासकानां स्वस्वरूपधारणे शक्तिं ददातीत्यर्थः। यस्य प्रशिषं मूलनृसिंहव्यूहस्याङ्गचतुष्टयप्रशिषं प्रकर्षेण शिष्यत इति प्रशिषं प्रोक्तरितं द्वात्रिंशद्व्यूहं विश्वे देवाः सर्वे देवा उपासत उपास्तिं कुर्वन्तीत्यर्थः। यस्य च्छायामृतं छायेति गृहनाम च्छायैवामृतं छायामृतं महाचक्रं तदन्तर्भावादस्य व्यूहस्य यो व्यूहो मृत्युमृत्युर्मृत्योरपि मृत्युः। मृत्युर्यस्योपसेचनमिति श्रुतेः। कं प्रजापतिं ब्रह्मणो व्यूहं तदादिन्यायेन बद्धक्रमकत्वात्सर्वं संगृह्णाति देवं देवो दानाद्वा द्योतनाद्वा दीप-

**हविषा विधेम। तस्मादुच्यते मृत्युमृत्युमिति। अथ कस्मादुच्यते नमामीति यस्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च। प्र नूनं ब्रह्मणस्पतिर्मन्त्रं**

नाद्वेति यास्कवचनात्। हविषा हविष्प्रदानेन होमेन नैवेद्येन वाऽर्चनेन। अत एव वक्ष्यति महाचक्रप्रकरणेऽनुष्टुभा होमं कुर्यादनुष्टुभाऽर्चनमिति। विधेम परिचरेम। यद्वा विधतिर्दानकर्मेति यास्कवचनाद्ब्राह्मव्यूहप्रभृतिव्यूहाय हविर्देम इति विभक्तिव्यत्ययः कशब्दे देवशब्दे च। तस्मिन्पक्षे विधतिः परिचरणकर्मेति तत्त्वार्थः। एवं प्रागुक्तोपास्ये मृत्युमृत्युपदं व्याख्यातं तस्मादित्युपसंहरति—तस्मादुच्यते मृत्युमृत्युमिति। एवं प्रागुक्तपदं प्रागुक्तोपास्ये व्याख्यायाथेदानीमुभयापेक्षया द्वितीयं दशमं च पदं व्याख्यातुं देवप्रश्नोऽथ कस्मादुच्यते नमामीति। स होवाच प्रजापतिरित्यनुषज्योत्तरम्। यस्मात्स्वमहिम्नेत्यनुषङ्गः। नमामीत्यस्याऽऽख्यातपदत्वादस्मदर्थं प्रत्ययार्थं विहाय प्रकृत्यर्थं व्याचष्टे। तथा चास्य प्राक्तनसर्वपदार्थसंबन्धिनः सर्वत्रानुषङ्गः। यस्माच्छब्दोपादानात्स्वमहिम्नेत्यनुषङ्गः प्रकृत्यर्थेन। यस्माद्यं सर्वे देवाः प्रागुक्तविशेषणं मूलनृसिंहव्यूहं सर्वे पृथिव्यन्तरिक्षब्रह्मलोकनिवासिनो महाचक्रोपासकाश्च नमन्ति नमस्कुर्वन्तीति सर्वनमस्कार्यगुणविशिष्ट उपास्य इति दर्शयति। तथाच द्विविधोपासकानां देवानामधिकारिविशेषणमाह—मुमुक्षवो ब्रह्मवादिनश्चेति। अब्रह्मवादिन इत्यन्यथा द्वैविध्यासंभवात्। यद्वा मुमुक्षवो ब्रह्मवादिनो मुक्ताश्च लीलया विग्रहं परिगृह्य नमन्तीत्यनुषङ्गः। एतदुक्तं भवति। ब्रह्मलोके स ब्रह्मा स शिवः स हरिरित्यादिमन्त्रवर्णोपात्तसामाङ्गनृसिंहगायत्र्या व्याख्यातनृसिंहव्यूहश्चतुर्थकवचाङ्गाश्रयत्वेनोपास्यस्ततश्च कवचं सर्वानेतानुपास्यान्संगृह्णातीत्यङ्गचतुष्टयान्तर्गतानन्यांश्च। अत एवोक्तमस्माभिः कवचाङ्गमन्त्रार्थं व्याचक्षाणैः प्रपञ्चसारे—

"कवचग्रह इत्यस्माद्धातोः कवचसंभवः।
हुं तेजस्तेजसा तेन गृह्यते कवचं ततः" इति।

एवं प्रकृत्यर्थसहितेन च पदार्थं प्रतिपाद्य साधारणरूपरूपं नमस्कार्यमभिधायाथेदानीं सामादिमन्त्रसाधारणत्वेन पुनः प्रकृत्यर्थमृचा व्याचष्टे—प्र नूनमिति। उक्थ्यं प्रशस्तं ब्रह्मणस्पतिर्ब्रह्मणः साकारस्य निराकारस्य चोपदेशद्वारा पाता पालयिता। नूनं निश्चितं मन्त्रं सामराजं स्तुहीत्यादि

वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे । तस्मादुच्यते नमामीति । अथ कस्मादुच्यतेऽहमिति । अहमस्मि प्रथमजा ऋता३स्य पूर्वं देवेभ्यो अमृतस्य ना३भायि । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्तमा३द्मि ।

य आत्मदा इत्यन्तं द्वात्रिंशद्व्यूहप्रतिपादकं मन्त्रजातम् । यस्मिन्प्रागुक्ते मन्त्र इन्द्रो मित्रो वरुणोऽर्यमा देवा ओकांसि गृहाण्युपासनाय चक्रिरे कृतवन्त इत्यर्थः । अनेनैतद्दर्शयति । यथा देव उपास्ये गुरौ च भक्तिस्तथा मन्त्रेऽपीति । तदुक्तम्—"गुरौ देवे च मन्त्रे च सदृशी भक्तिरिष्यते" इति । तत्र च मन्त्रस्य नमस्कार्यत्वश्रवणात् । एवं नमामीत्येतदाख्यातपदमुक्तोपास्ये व्याख्यातं तस्मादित्युपसंहरति—तस्मादुच्यते नमामीति । एवं नमामीति पदं नवपदसंबन्धत्वेन व्याख्यायाथेदानीमहमिति कर्तृपदं सर्वसाधारण्येन व्याख्यातुं देवप्रश्नोऽथ कस्मादुच्यतेऽहमिति नन्वाख्यातोत्तमपुरुषप्रयोगादर्थादेवाहमिति प्राप्ते पुनः प्रयोगः स च कस्मादिति चोद्याभिप्रायेण। स होवाच प्रजापतिरित्यनुषज्योत्तरम् । पश्चाङ्गोपासनाकर्तृफलं निर्दिश्यते तादात्म्यलक्षणम् । न च मुमुक्षोरेतदनिष्टमिति वाच्यमैश्वर्य एतत्फलावाप्तेः । य इह स्थातुमपेक्षते तस्य तादात्म्यलक्षणं सर्वैश्वर्यं ददाति देहान्ते देवः परं ब्रह्म तारकमिति श्रुतेः फलपदमिदं न तूपासकपदम् । तच्च पृथक्सामाभिव्यक्तं मन्त्रेण व्याचष्टे तच्च सर्वपदेष्वनुषज्यमानं सर्वपदजातं सामाभिव्यक्तमेव व्याख्यातमिति नियमं दर्शयति । तथाच प्रागुक्ता सर्वोपासना सामपूर्विकैवेति । ततश्च प्रागुक्तायामुपासनायामुपास्योपासकभावेन प्रवृत्त उपासक उपासनातः शुद्धान्तःकरणः प्रत्यगात्मकतयैवोपास्यं साक्षात्कृत्याऽऽहानेन साम्नाऽन्येषामुपासनफलं दर्शयितुम् । अहमस्मि प्रागुक्तमुपास्यमहं भवामि प्रथमजाः पुरश्चरणोपासनायाः प्रथमोत्पन्नः । ऋतस्य सत्यमूर्तामूर्तस्य जगतः पूर्वं स्यां देवेभ्योऽमृतस्य क्षीरस्य नाभायि नाभ्यां यो मा ददाति स्वी करोति धारयति वा स इदेव इत्थमेव मा मामवा रक्षितवान् । तथाचात्र स्तावकेन मन्त्रेण सामाभिव्यक्तेन फलनिर्देशं कुर्वन्क्षीरोदार्णवसंबन्धिनीयमुपासनेति दर्शयति । अहमन्नं क्षीरमुपास्याधारमहमेव भवाम्यन्नमदन्वा योऽत्ति तमन्नमदन्तं देवब्राह्मणेभ्योऽन्नमदातारमहमद्म्यहं भक्षयामि । यद्वाऽन्नमदन्तमन्नादनकर्तारं

अहं विश्वं भुवनमभ्यभवा३म् । सुवर्न
ज्योतीः । य एवं वेदेत्युपनिषत् ॥ ४ ॥

इत्याथर्वणीये नृसिंहपूर्वतापनीयोपनिषदि द्वितीयोपनिषत्समाप्ता ॥ २ ॥

जीवभावं पश्चाद्भोपासनाततोऽग्नि भक्षयामि संसाररूपं विनाशयामीत्यर्थः । यत एवमतोऽहं विश्वं सर्वं भुवनमभ्यभवामभिभवामि सुवर्न ज्योतीः सूर्यज्योतिरिव । यद्वा सुवर्णाकारस्योपास्यस्य ज्योतिः प्रकाशोऽहमेव भवामीति फलनिर्देशः । इदं च फलमनुषङ्गात्प्रतिपदं प्रतिपादं चानुसंधेयम् । असकृत्साकाराखण्डवाक्यार्थोपदेशे हि दार्ढ्यं स्यात्तत्त्वमसीति नवकृत्व उपदेशवदेवं साकारनिष्ठस्य यद्यन्तःकरणं शुद्धं ततोऽपीदमेव फलं व्याख्यातम् । अत एव नोत्तरोपसंहारः प्राक्तनवत्तस्मादुच्यत इति । उपासनाभ्यासादद्वैतापत्तेर्यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति श्रुतेः । एतत्सर्वं सामाङ्गप्रणवेन हृदयमन्त्रव्याख्यानावसरे स्पष्टी क्रियते । य उपासक एवं प्रागुक्तमुपास्यमहंपरिग्रहोपासनयाऽधिकारतरतमभावाद्वोपास्योपासकभावेन वा वेदोपास्ते । इतिशब्दः प्रागुक्तसफलोपासनसमाप्तिं दर्शयति —उपनिषदिति । उपनिषच्छब्दो व्याख्यातः । इदं च सामाधीतं नैवेद्ये विनियुक्तं तच्चाऽऽनुष्टुभं द्रष्टव्यम् । ननु(तु) षट्स्वरं साङ्गं वा यतः प्रथमोपनिषदि यच्छब्दस्य तृतीयव्याख्यानावसरे तथैव व्याख्यातत्वादानुष्टुभं चानुष्टुप्स्वराभ्यां गेयं तौ च प्रथमोत्तमौ तथा चानुष्टुभा भूतोत्पत्तिव्याख्यानावसरे साक्षित्वेनोद्भावितायामृचि तस्यैषा भवतीत्यत्रानुष्टुप्प्रथमा भवत्यनुष्टुबुत्तमा भवतीति प्रथमोत्तमयोः स्वरयोरनुष्टुप्शब्देन व्याख्यातत्वाद्वाग्वा अनुष्टुबिति गीतिमात्रेऽपि वाक्शब्दस्य प्रयुक्तत्वात् । सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायामिति श्रुतेः । वाचैव प्रयन्ति गीत्यैव प्रयन्ति प्रथमस्वरेण गायन्ति वाचैवोद्यन्ति गीत्यैवोत्तमस्वरेण गायन्त्यक्षराणीत्यर्थः । परमा वा एषा छन्दसां यदनुष्टुबित्यनुष्टुप्छन्द इति । ततश्चास्मिन्प्रकरणेऽनुष्टुप्शब्देन त्रयोऽर्था उच्यन्ते क्वचित्प्रथमौ स्वरौ क्वचिद्गीतिः क्वचिच्छन्द इति यथायोग्यतया ग्राह्या इत्यनुष्टुप्सामोद्धार इति रहस्यमिति ॥ ४ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत आद्यकृतावाथर्वणनृसिंहपूर्वतापनीयोपनिषद्भाष्ये द्वितीयोपनिषद्व्याख्या संपूर्णा ॥ २ ॥

देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्य शक्तिं बीजं च नो ब्रूहि भगव इति स होवाच प्रजापतिर्माया वा एषा नारसिंही सर्वमिदं सृजति· सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं विद्याद्य एतां मायां शक्तिं वेद स पाप्मानं तरति स संसारं·तरति स मृत्युं तरति सोऽमृतत्वं च गच्छति महतीं..श्रियमश्नुते.

एवं द्वितीयोपनिषदि साङ्गां सफलामुपासनामभिधायाथेदानीं तस्याः शक्तिबीजनिर्णयपूर्वकत्वात्तन्निर्णयार्थं तृतीयोपनिषदारभ्यते प्रश्नोत्तराख्यायिकया । नन्वेवं तर्हीयं पूर्वमेवाऽऽरब्धव्यैतत्पूर्वकत्वात्प्रागुक्ताया उपासनायाः । सत्यम् । शक्तिबीजद्वयस्य संपुटीकरणेन विवक्षितत्वादर्थात्प्राक्प्राप्तस्यार्थस्य पश्चात्संकीर्तने संपुटीकरणं स्यादन्यथाऽर्थानुसारेण संकीर्तने पूर्वमेव द्वयं स्यान्नोपरिष्टादिति संपुटीकरणासंभवादिति पाठत उपासनाया ऊर्ध्वं संबन्धः शक्तिबीजस्यार्थाख्येन प्रमाणेन प्राक्संबन्धः । न ह्यनवधृतशक्तिकस्योपासनस्योपास्याकारावधृतिः । तथाहि कथमस्यायमाकार इति पर्यनुयुङ्क्ते स्वसामर्थ्यादिति वाच्यं ततश्च सामर्थ्यावधारणपूर्वकमेवोपास्याकारावधारणमित्यर्थात्प्राक्संबन्धः पाठश्चानन्तरमिति कथं नु संपुटीकरणं स्यादिति प्रजापतेर्हृदयम् । किंचोपासनानन्तरं पुटिताऽपीयमुपनिषच्छक्तिबीजनिर्णयात्मिका तत्र तत्र पदपादसाङ्गोपासनावतरणं यस्मात्स्वमहिम्ना यः स्वमहिम्नेति वीप्साशब्देन चापकृष्टा सती पूर्वं संबन्धं लभते महोपनिषदपकर्षणवदतश्चाऽऽरम्भणीयेति सिद्धम् । देवा ह वा इत्यादि स होवाच प्रजापतिरित्यन्तं स्पष्टार्थम् । मायाविपुरुषाधीना मायेत्युच्यते । लोके हि माया प्रसारकमायाव्यधीना दृष्टा । वै प्रसिद्धम् । एषा नारसिंही नृसिंहाधीना यस्मादियं नृसिंहाकारब्रह्माधीना सती । सर्वमिदं सृजतीत्यादि संहरतीत्यन्तं स्पष्टार्थम् । जगज्जन्मस्थितिलयकारणत्वमेतदधीनं शुद्धस्य ब्रह्मणोऽकारणत्वात् । यस्मादेवं तस्मान्मायामेतां शक्तिं विद्यान्नृसिंहाधीनामुपासीत । य एतां मायां शक्तिं वेदोपास्ते । तदुपासनाफलमाह—स पाप्मानमित्याद्यश्नुत इत्यन्तं

१ घ. ङ. छ. 'जं नो । २ क. ग. स मृत्युं जयति स पा' ।

मीमांसन्ते ब्रह्मवादिनो ह्रस्वा वा दीर्घा वा प्लुता वेति। यदि ह्रस्वा भवति सर्वं पाप्मानं दहत्यमृतत्वं च गच्छति यदि दीर्घा भवति महतीं श्रियमाप्नुयादमृतत्वं च गच्छति यदि प्लुता भवति ज्ञानवान्भवत्यमृतत्वं च गच्छति तदेतदृषिणोक्तं निदर्शनम्—सईं पाहि य ऋजीषी तरुत्रः श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं च यामिन्द्रसेनेत्युत आहुस्तां विद्यां ब्रह्मयोनिं सरूपां तामिहाऽऽयुषे शरणं प्रपद्ये।

स्पष्टार्थम्। मीमांसन्ते विचारयन्ति ब्रह्मवादिनो ह्रस्वा वा दीर्घा वा प्लुता वेति। सामान्तर्भावात्प्लुतैवेति प्राप्ते ह्रस्वदीर्घायाः फलविशेषसंबन्धार्थमियं मीमांसा तामाह। यदि ह्रस्वेत्यादि गच्छतीत्यन्तं स्पष्टार्थम्। ह्रस्वदीर्घप्लुतसंबन्धः सव्यञ्जनस्य स्वरस्योत साकाराख्यं व्यञ्जनं विहाय स्वरस्य संबन्ध इति संदेहस्तस्मिन्संदेहे निर्णयायैतद्वक्ष्यमाणं निदर्शनमुदाहरणमृषिणोक्तं सईमिति। साकारव्यञ्जनात्पृथक्करणं सबिन्दुकस्य स्वरस्यातः सबिन्दुके स्वरे ह्रस्वादिसंबन्धो मायाबुद्ध्योपासनं च। सईमिति समासः। सकारश्चे च सईम्। तस्याः संबोधन ईमिति निपातत्वाददोषः। हे सईं सबिन्दुकस्वर त्वदालम्बनेनैता वक्ष्यमाणाः शक्तीरुपासिताः पाहि रक्ष। यद्वा स इति व्यस्तं यत्तदोर्नित्यसंबन्धः। य ऋजीषी, ऋजुभावेच्छुस्तरुत्रस्तरणशीलः स ईं शक्तिं सबिन्दुकं स्वरं श्रियादिबुद्ध्योपासितं पाः पालितवान्। पा पालने। पालकाधीनत्वात्पालनीयशक्तेः। हीति निश्चितम्। सबिन्दुकस्वरालम्बनत्वेनोपास्यास्तत्र व्यूहसंबन्धिनीः शक्तीराह। श्रियं विष्णुशक्तिं पाः पालितवान्। यद्वा पाहि। एवमुत्तरत्रापि द्विधा संबन्धः। लक्ष्मीं नृसिंहशक्तिम्। औपलामम्बिकां गौरीं महेश्वरशक्तिं गां सरस्वतीं ब्रह्मशक्तिं षष्ठीं च स्कन्दशक्तिम्। यामिन्द्रसेनेत्याहुस्तामिन्द्रशक्तिमिन्द्राणीं विद्यामीश्वरशक्तिं ब्रह्मयोनिं ब्रह्मावाप्त्यै कारणभूतां सरूपां साकारां तां तां शक्तिमिह सबिन्दुके स्वर आयुष उपासनानुकूलायुरभिवर्धनाय शरणं प्रविशामि। एवं शक्त्यक्षरनिर्णयं तदाश्रितां सप्तविधशक्त्युपासनां दीर्घादिमात्रोपासनां सफलामभिधायाथेदानीं

सर्वेषां वा एतद्भूतानामाकाशः परायणं सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते। आकाशादेव जातानि जीवन्त्याकाशं प्रयन्त्यभिसंविशन्ति तस्मादाकाशं बीजं विद्यात्तदेतदृषिणोक्तं निदर्शनम्—हꣳ सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा

बीजाक्षरनिर्णयं तदाश्रितां सफलां चोपासनामभिधातुं तन्निर्णयमाह। सर्वेषां वा इत्याद्यभिसंविशन्तीत्यन्तं स्पष्टार्थम्। आकाशशब्दो हकारं वक्ति। सर्वागमशास्त्रप्रसिद्धेरागमरूपोपनिषत्प्रसिद्धेश्च। यस्मादेवं तस्मादाकाशशब्दवाच्यं हकारं बीजं विद्यात्। बीजनिदानं मूलकारणं तद्बुद्ध्योपासीत तद्वाचकं वा निपातरूपेण। स चायं वाच्यवाचकसंबन्धो लोके प्रसिद्ध इति मन्त्रागमशास्त्रैकगम्यमेवं शक्त्यक्षरमपि शक्तिवाचकत्वाच्छक्तिस्तद्बुद्ध्योपास्यत्वाद्वा शक्तिबीजयोस्तद्बुद्ध्योपास्यत्वं तद्वाचकत्वादेवेति रहस्यम्। यथा प्रणवाक्षरं ब्रह्मवाचकत्वाद्ब्रह्मबुद्ध्योपास्यमभूत्तद्वच्छक्तिबीजं तच्च सस्वरं व्यञ्जनमात्रं वेति संदेहस्तद्व्यावृत्त्यर्थमाह। तदेतदृषिणोक्तं निदर्शनम्। तच्चोक्तार्थम्। स परमात्मा हं मूलकारणं सद्वहत्। यद्वा सकारेण संबद्धमजपागायत्रीरूपेण वर्तमानं नासिकापुटाभ्यां निःसृतं ब्राह्मणस्त्रीशूद्राद्यधिकारतया वर्तमानं संकल्पादेव फलदं परमात्मवाचकं स इति। हंसः परमात्मा। वक्ष्यमाणं सर्वमभूदिति वाक्यशेषः। शुचौ बुद्धौ सीदतीति शुचिषत्। हंस एव वसुर्देवः स एवान्तरिक्षे सीदतीत्यन्तरिक्षसद्बृहद्बृंहणत्वादन्तरिक्षाश्रितो देवः स एव होता वेदिषद्वेद्यां सीदतीति वेदिषत्स एवातिथिर्दुरोणसत्। दुरोण इति गृहनाम दुर्वा भवन्ति दुस्तर्णस्तस्मिन्सीदतीति दुरोणसत्। स एव नरि जीवे सीदतीति नृषत्। य आत्मनि तिष्ठन्निति श्रुतेः। वरसद्वरे वरिष्ठे स्थाने सीदतीति वरसत्स एवर्तेन सत्येन सीदतीति ऋतसत्स एव व्योम्नि हृदयाकाश उपलभ्यतया सीदतीति व्योमसत्। अब्जा अप्सु क्षीरोदार्णव उपास्यतया जात इत्यब्जा गोषु वोपास्यतया प्रतिपाद्यत्वेन जात इति गोजाः। ऋतं सत्यमिति मन्त्रवर्णादुपास्यतया जात इति ऋतजाः। अद्रौ मेघे जात इत्यद्रिजाः।

ऋतं बृहद् । य एवं वेदेति महोपनिषत् ॥ १ ॥

इत्यथर्ववेदान्तर्गतनृसिंहपूर्वतापनीयोपनिषदि तृतीयोपनिषत्समाप्ता ॥ ३ ॥

छन्दसि जनिरयं सुबन्तप्रयोगे सकारान्तो दृष्ट इति सोपपदो विसर्गान्तो दीर्घश्च सुनेजा इतिवत् । एवं परमात्मैव बृहन्महानिति । ऋतं सत्यं ज्ञेयमिति शेषः । य उपासक एवं परमात्मतत्त्वं बीजाक्षरवाच्यं तद्बुद्ध्या चोपास्यं वेद जानाति । इतिशब्दः शक्तिर्बीजनिर्णयसमाप्तिं द्योतयति । यद्वेतीत्येवं निपातानामनेकार्थत्वादित्येवं महोपनिषदिति । महोपनिषदि पठितानां मन्त्राणामेवंशब्दादेतदेव शक्तिबीजं संबध्नाति । ततश्च मूलमन्त्रे षष्ठपदे त्र्यक्षरं नृकारं सकारं विहाय शिष्टमक्षरमद्वयं यथापठितं शक्तिबीजं द्रष्टव्यं सामर्थ्यात् । परमात्मवाचकमाथर्वणर्चि द्वितीयं हंसर्चि प्रथमं यत्पठितं तदित्येवं स्तुतिमन्त्रेषु सर्वेषु चतुर्थपदे नृकारं सकारं विहाय यच्छिष्टमक्षरद्वयं यथापठितं तच्छक्तिबीजमिति तत्त्वं रहस्यं चेति शक्तिबीजाक्षरनिर्णयः ॥ १ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत आद्यकृतावाथर्वणनृसिंहपूर्वतापनीयोपनिषदि तृतीयोपनिषद्भाष्यं संपूर्णम् ॥ ३ ॥

एवं तावच्छक्तिबीजसंपुटितां साङ्गां नृसिंहब्रह्मोपासनामभिधायाथेदानीं तदङ्गहृदयादिमन्त्रव्याख्यानाय यथासंख्यं सामाङ्गमूलमन्त्राङ्गमन्त्रोपनिषत्प्रश्नोत्तररूपाख्यायिकया चतुर्थ्यारभ्यते । ननु यदि मूलमन्त्राङ्गमन्त्रव्याख्यानायोपनिषदियं प्रस्तुता तर्हि तदङ्गन्यासावसरेऽस्याः प्रस्तावः स्यान्न त्विदानीं प्रस्तावो युक्तः । किंच मूलमन्त्रपदव्याख्यानावसरे तदुपासनायाः कृत्स्नाया एवोक्तत्वादन्ते तत्फलस्य चोक्तत्वात्किमवशिष्टं यदर्थमियमुपनिषदारभ्यते । अत्रोच्यते । सत्यम् । तत्तदङ्गन्यासावसरे पञ्चमाङ्गन्यासावसरे च प्रत्यक्षरमुभयत ओंकारो भवतीति तद्वन्मूलमन्त्राक्षराणां यथापठितानां व्यत्यासे कृते मूलमन्त्रतत्पदापरिज्ञाने प्राप्ते तत्परिज्ञानस्यैवान्तरङ्गत्वात्तदर्थं पदोद्धारः स्तुनस्तदनन्तरं तदर्थज्ञाने प्रस्तुते शक्तिर्बीजनिर्णयः प्रस्तुत इत्येवं पञ्चमाङ्गन्यासपदोद्धारतदर्थशक्तिबीजनिर्णयानामन्योन्यं बद्धक्रमकत्वादन्तरङ्गत्वाच्च तदन्तराले प्रवेशोऽस्या

**देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्याङ्गमन्त्रान्नो ब्रूहि भगव इति । स होवाच प्रजापतिः प्रणवं सावित्रीं यजुर्लक्ष्मीं नृसिंहगायत्रीमित्यङ्गानि जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । ओमित्येतदक्षर-**

---

युक्त इतीयमुपनिषच्छक्तिबीजनिर्णयानन्तरं पठिता । यथा गुरुमतेऽधिकारलक्षणं मध्य एव पठितं तथेयमुपनिषदुपरिष्टान्महाचक्रोपासनाफलकथनयोर्बद्धक्रमकत्वात्तदन्तराले प्रवेशमलभमाना मध्यस्थैव शोभते । किंच सामाङ्गप्रणवेन शक्तिबीजाक्षरमिश्रितेन हृदयाङ्गमन्त्रो व्याख्येय इति न तदङ्गन्यासावसरेऽस्याः प्रवेशो युक्तः । तदानीं शक्तिबीजाक्षरस्याप्रस्तुतत्वेनाशक्यत्वान्मिश्रणस्य । तस्माच्छक्तिबीजनिर्णयानन्तरमस्या आरम्भो युक्तः । यदुक्तं कृत्स्नविद्याभिधानात्किमवशिष्टमिति तन्न । अत्रत्यमेवानागतावेक्षणन्यायेन व्याख्यातृभिरेव तत्रोपसंहृतं न तु तत्रत्यं शब्दोपात्तमिति । यदुक्तमन्ते फलस्य चोक्तत्वात्किं शिष्टमिति तदुक्तमेव प्राक्तनन्यायेन कृत्स्नत्वाद्विद्यायास्तस्मात्सूक्तं शक्तिबीजनिर्णयानन्तरमस्या आरम्भः शोभत इति । देवा ह वा इत्यादि नारसिंहस्येत्यन्तं स्पष्टार्थम् । अङ्गमन्त्रान्नो ब्रूहि भगव इति । वेदे रुकारादेशान्तो भगवच्छब्द इति संबोधनं भगव इति । अङ्गेषु हृदयाद्यङ्गेषु व्याख्येयेषु तद्व्याख्यानमन्त्रा अङ्गमन्त्रा यद्वाऽङ्गानि च मन्त्राश्चाङ्गमन्त्रा इत्युभयथाऽपि समास उक्तः किंतूभयथाऽप्येषां मूलमन्त्राङ्गमन्त्रसंबन्धः संख्यातः स्थानाच्च सामर्थ्याच्च प्रतीतो नूनं न निवारयितुं शक्यते । स होवाच प्रजापतिरित्यादि गच्छतीत्यन्तमुक्तार्थम् । येनैव क्रमेणाङ्गानामुद्देशः कृतस्तेनैव क्रमेण तद्व्याख्यामाह—ओमित्येतदक्षरमिति । कथं पुनरोंकारनिर्णयः साकारात्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यत इति । उच्यते । ओमित्येतदालम्बनमेतद्वै सत्यकाम ओमित्यात्मानं युञ्जीत । ओमिति ब्रह्मोंकार एवेदं सर्वमित्यादिश्रुतिभ्यो रज्ज्वादिरिव सर्पादिविकल्पस्याद्वयात्मा परमार्थः सन्प्राणादिविकल्पास्पदो यथा तथा सर्वो वाक्प्रपञ्चः प्राणाद्यात्मविषय ओंकार एव स चानुष्टुप्त्र्यङ्गं सत्त्वात्मस्वरूपमेव तदभिधायकत्वादोंकारविकारशब्दाभिधेयश्च सर्वः प्राणादिरात्मविकल्पोऽभिधानव्यतिरेकेण नास्ति वाचारम्भणं विकारो नामधेयं तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं ह्ीदं नापनीत्यादिश्रुतिभ्योऽत आहो-

मिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एव सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पाज्जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः

---

मित्येतदक्षरमिदं सर्वमिति । यदिदमर्थजातमभिधानाभिधेयभूतं तस्याभिधानाव्यतिरेकादभिधानभेदस्योंकाराव्यतिरेकादोंकार एवेदं सर्वं परं च ब्रह्माभिधानाभिधेयोपायपूर्वकमवगम्यत इत्योंकार एव । तस्यैतस्य परापरब्रह्मरूपस्याक्षरस्योमित्येतस्योपव्याख्यानं ब्रह्मप्रतिपत्त्युपायत्वाद्ब्रह्मसमीपतया विस्पष्टं प्रकटकथनमुपव्याख्यानम् । प्रस्तुतं जानीयादिति शेषः । न त्वनुपक्तो व्यवायात्वानुषज्यत इति न्यायात् । भूतं भवद्भविष्यदिति । कालत्रयपरिच्छेद्यं यत्तदोंकार एवोक्तन्यायतः । यच्चान्यत्त्रिकालातीतं कार्याधिगम्यं कालत्रयापरिच्छेद्यमव्याकृतादि तदप्योंकार एव । अभिधानाभिधेययोरेकत्वेऽभिधानप्राधान्येन निर्देशः कृत ओमित्येतदक्षरमिदं सर्वमित्यादि । अभिधानप्राधान्येन निर्दिष्टस्य पुनरभिधेयप्राधान्येन निर्देशोऽभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थम् । इतरथा ह्यभिधानतन्त्राऽभिधेयप्रतिपत्तिरित्यभिधेयस्याभिधानत्वं गौणमित्याशङ्का स्यादेकत्वप्रतिपत्तेश्च प्रयोजनमभिधानाभिधेययोरेकेनैव प्रयत्नेन प्रविलापयंस्तद्विलक्षणं ब्रह्म प्रतिपद्यत इति । तथाच वक्ष्यति । पादा मात्रा मात्राश्च पादा इति । तदाह । सर्वं ह्येतद्ब्रह्म । सर्वं यदुक्तमोंकारमात्रमेतद्ब्रह्म । तच्च ब्रह्म परोक्षाभिहितं प्रत्यक्षतो विशेषेण निर्दिशति—अयमात्मा ब्रह्मेति । अयमिति चतुष्पात्त्वेन प्रविभज्यमानं प्रत्यगात्मानं प्रत्यगात्मतयाऽभिनयेन निर्दिशति —अयमात्मेति । सोऽयमात्मोंकाराभिधेयः परापरत्वेन व्यवस्थितश्चतुष्पात्कार्षापणवत् । न गौरिव चतुष्पात् । त्रयाणां विश्वादीनां पूर्वपूर्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिति करणसाधनः पादशब्दस्तुरीयस्य तु पद्यत इति कर्मसाधनः पादशब्दः । कथं चतुष्पात्त्वमित्यत्राऽऽह—जागरितं स्थानमस्येति जागरितस्थानः । बहिष्प्रज्ञः स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स बहिष्प्रज्ञो बहिर्विषये यस्य प्रज्ञा विद्याकृताऽवभासत इत्यर्थः । तथा सप्ताङ्गः सप्त शक्तयोऽङ्गे हृदयाख्ये यस्य स तथोक्तः । विष्णुशक्तीनां विष्णुवक्षस्थलाश्रयत्वप्रसिद्धेः । विष्णोर्वक्षस्थलाश्रया इति स्मृतेः । विष्णोर्वक्षस्थले स्थितामिति च । प्रविकाशिपङ्कजां वक्षस्थलेन श्रियमुद्वहन्विभुरिति च । तथैकोनविंशतिमुखो मूलमन्त्रापेक्षयैकोनविंशतितममक्षरं बीजं मुखं यस्य मूलनृसिंहव्यूहस्य स तथोक्तः । नाभे-

# स्थूलभुग्वैश्वानरः प्रथमः पादः

ऽर्ध्वं मूर्धतः प्राग्घृदयाख्यमङ्गमत उपास्योपासकयोरैक्ये भेदे वा हृदयाङ्गन्यासादिकमविरुद्धम् । नन्वेवं सप्तान्यङ्गानि मूर्धैव सुतेजा इत्येवमादीनि यस्य स तथोक्तः । तथैकोनविंशतिर्मुखान्यस्य बुद्धीन्द्रियकर्मेन्द्रियाणि वायवश्च प्राणादयः पञ्च मनो बुद्धिरहंकारश्चित्तमिति मुखानीव तान्युपलब्धिद्वारत्वादित्येवं यथासंख्यं विराड्ढिरण्यगर्भपरत्वेन वाक्यद्वयं माण्डूक्योपनिषत्प्रणवविद्यायां व्याख्यातं तथाऽत्रापि कस्मान्न व्याख्यायते । उच्यते । अत्रास्यापरविद्याप्रकरणाश्रितत्वात्प्रणवविद्यायां तथाऽङ्गत्वेन च विनियोगात्प्रणवमङ्गं जानीयादिति । तथा शक्तिबीजनिर्णयानन्तरमस्याङ्गस्य पाठात् । माण्डूक्ये प्रणवविद्यामारभ्याधीतत्वात्प्राधान्यमङ्गत्वेन विनियोगाभावाच्च तथा तत्र शक्तिबीजयोरप्रस्तुतत्वाच्च विद्याभेदाच्च तथाव्याख्यानभेदेनार्थभेदात्पृथगर्थप्रतीतिर्ज्यायसी । ननूभयत्राप्यन्यूनानतिरिक्तपाठप्रत्यभिज्ञानेन विद्यैक्यादङ्गविद्याया उत्कर्षः प्रधानविद्याया अङ्गविद्याप्रवेशः । अत्रोच्यते । अन्यथात्वं शब्दादिति चेन्नाविशेषादिति न्यायेन विद्याभेदस्यैव युक्तत्वादाभ्युदयिककाम्येष्टिवाक्यवत् । ननु भेदेऽपि प्रधानविद्याया एवाङ्गत्वेन विनियोगोऽस्तु प्रत्यभिज्ञानाच्च विद्यैक्यमिति तन्न । प्रकरणान्तरे प्रयोजनान्यत्वमिति न्यायेन नैयमिकाग्निहोत्रकौण्डपायिनामग्निहोत्रवद्भेदस्यैव युक्तत्वात् । किंचोभयत्रापि बहुतरपाठसाम्येऽपि क्वचित्पाठभेदोऽपि दृश्यते । तुरीयमात्रानिरूपणावसर एषोऽन्तर्याम्येष ईशान एष प्रभुरिति माण्डूक्ये पाठः । तापनीये त्वेषोऽन्तर्याम्येष योनिरितीशानप्रभुपदद्वयं विहाय पाठः । तस्माद्भिन्नत्वाद्यद्यत्र योग्यं प्रस्तुतं च तत्तथा व्याख्येयम् । तथा स्थूलभुक्स्थूलां पृथिवीं हृदयाङ्गान्तर्गतां भुङ्क्ते सेवत इति स्थूलभुक् । विश्वेषां नराणां स्वस्मिन्नेवानेकधानयनाद्विश्वानरो विश्वानर एव वा वैश्वानरः । ननु यथा माण्डूक्ये वैश्वानरशब्दसामर्थ्यात्सप्ताङ्गैकोनविंशतिमुखपदद्वयं यथासंख्यं विराड्ढिरण्यगर्भपरत्वेन व्याख्यातं तथाऽत्रापि वैश्वानरशब्दसामर्थ्यादुभयपरत्वेन व्याख्यायतां किमिति शक्तिबीजपरत्वेन प्रकरणसंनिधेर्वाक्यसंनिधेर्बलीयस्त्वात् । सत्यम् । यद्यत्र वैश्वानरशब्दो वैश्वानरविद्यापरत्वेनैव वर्तेत तर्ह्येवं स्यान्न त्वेतत्स्याद्यौगिक्या वृत्त्याऽन्यपरत्वेन व्याख्यातत्वात् । किंच तत्र तत्र विधेयार्थभेदेन वाक्यभेदेन वाक्यसंनिधिर्न निश्चितोऽत उभयत्रापि प्रकरणसंनिधेरविशिष्टत्वात्प्राग्व्याख्यैव ज्यायसी । प्रथमः पादस्तत्राकारोकारमकाराश्रितत्वेन तद्वाचकत्वेन वैवंविधविशिष्टबुद्ध्युत्पत्तिरिति प्रथमः पादः । एतत्पूर्वकत्वादुत्तरपा-

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशति-
मुखः प्रविविक्तभुक्तैजसो द्वितीयः पादो यत्र
सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं
पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन

दाधिगमस्येति प्राथम्यम् । नन्वयमात्मा ब्रह्मेति प्रत्यगात्मनोऽस्य चतुष्पात्त्वे प्रकृते कथं शक्तिबीजयोरङ्गमुखत्वकीर्तनमिति । नैष दोषः । उपास्योपासकयोरभेदस्यात्र विवक्षितत्वात् । एवं च सति नृसिंहब्रह्माद्वैतसिद्धिः । सर्वभूतस्थश्चाऽऽत्मैको दृष्टः स्यात्सर्वभूतानि चाऽऽत्मनि । यस्तु सर्वाणि भूतानीत्यादिश्रुत्यर्थश्चैवमुपसंहृतश्च स्यात् । अन्यथा परिच्छिन्न एव प्रत्यगात्मा सांख्यादिभिरिव दृष्टः स्यादिष्यते च सर्वोपनिषदां सर्वात्मैकत्वप्रतिपादकत्वम् । अतो युक्तमेवास्योपासकस्याऽऽत्मन उपास्येनाऽऽत्मनैकत्वमभिप्रेत्य सप्ताङ्गत्ववचनं मुखवचनं च । स्वप्नं स्थानमस्य तैजसस्य स स्वप्नस्थानः । जाग्रत्प्रज्ञाऽनेकसाधना बहिर्विषयेव भासमाना मनसः स्पन्दमाना सती तथाभूतसंस्कारं मनस्याधत्ते तन्मनस्तथा संस्कृतं विचित्र इव पटो बाह्यसाधनानपेक्षमविद्याकर्मभ्यां प्रेर्यमाणं जाग्रद्वदवभासते । तथाचोक्तमस्य लोकस्य सर्वावतो मात्रामपादायेत्यादि । परे देवे मनस्येकी भवतीति प्रस्तुत्यात्रैष देवः स्वप्ने महिमानमनुभवतीत्याथर्वणे । इन्द्रियापेक्षयाऽन्तःस्थत्वान्मनसस्तद्वासनारूपान्तर्लब्धा स्वप्ने प्रज्ञा येनेत्यन्तःप्रज्ञः । तैजसो विषयशून्यायां प्रज्ञायां केवलप्रकाशरूपायां विषयित्वेन भवतीति तैजसः । विश्वस्य सविषयत्वेन प्रज्ञायाः स्थूलाया भोग्यत्वम् । इह पुनः केवला वासनामात्रा प्रस्फुटप्रज्ञा भोग्येति प्रविविक्तो भोग इत्युकारमिश्रणं शक्तिबीजयोः । समानमन्यत् । द्वितीयः पादस्तैजसस्त्रिष्वपि स्थानेषु तत्त्वाप्रतिबोधलक्षणः स्वापोऽविशिष्ट इति पूर्वाभ्यां सुषुप्तं विभजते —यत्र सुप्तो न कंचनेत्यादि । न हि सुषुप्ते पूर्वयोरिवान्यथाग्रहणलक्षणं स्वप्नदर्शनं कामो वा कश्चन विद्यते । तदेतत्सुषुप्तं स्थानमस्येति सुषुप्तस्थानः स्थानद्वयप्रविभक्तमनस्पन्दितं द्वैतजातम् । तद्यथा रूपापरिज्ञानेनाविवेकापन्नं नैशतमोग्रस्तमिवाहः स्फुटप्रपञ्चमेकीभूतमुच्यते । अत एव स्वप्नजाग्रन्मनःस्पन्दनानि प्रज्ञानानि घनीभूतानीवेयमवस्था विवेकरूपत्वात्प्रज्ञानघन उच्यते । यथा रात्रौ नैशेन तमसाऽविभज्यमानं सर्वं घनमिव तद्वत्प्रज्ञानघनः । एवशब्दा-

१ क. ग. सुषुप्तो ।

**एवाऽऽनन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पाद एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानां**

---

ज्ञात्यन्तरं नास्तीत्यर्थः। मनसो विषयविषय्याकारस्पन्दनायासदुःखाभावादानन्दप्रायो नाऽऽनन्द एवानात्यन्तिकत्वात्। यथा लोके निरायासस्थितौ सुख्यानन्दभुगुच्यते। एष परमानन्द इति श्रुतेः। स्वप्नादिप्रतिबोधे चेतः प्रति द्वारीभूतत्वाच्चेतोमुखो बोधलक्षणं वा चेतो मुखं द्वारमस्य स्वप्नाद्यागमनं प्रतीति चेतोमुखः। भूतभविष्यज्ज्ञातृत्वात्सर्वविषयज्ञातृत्वमस्यैवेति प्राज्ञः। सुप्तो हि भूतपूर्वगत्या प्राज्ञ उच्यतेऽथवा प्रज्ञप्तिमात्रमस्यैवासाधारणं रूपमिति प्राज्ञ इतरयोर्विशिष्टमपि ज्ञानमस्ति सोऽयं प्राज्ञस्तृतीयः पादः। एष हि स्वरूपावस्थः साधिदैविकस्य भेदजातस्य सर्वस्येशिता नैतस्माज्ज्ञात्यन्तरभूतेऽन्येषामिव प्राणबन्धनं हि सोम्य मन इति श्रुतेः। अयमेव हि सर्वेश्वरः। अयमेव हि सर्वभेदावस्थाज्ञातेत्येष सर्वज्ञः। एषोऽन्तर्याम्यन्तस्तनु प्रविश्य सर्वेषां भूतानां नियन्ताऽप्येष एव। अत एव यथोक्तं सभेदं जाग्रत्प्रसूयत इत्येष योनिः। अत एव प्रभवश्चाप्ययश्च प्रभवाप्ययौ हि भूतानामेष एव कृतवानुभयत्रापि समानः पाठः। अत ऊर्ध्वं माण्डूक्य उक्त एवार्थे श्लोकान्पठित्वा तुरीयः पाद एतस्मिंस्तापनीये तु तान्विहाय तुरीयः पादः। तस्मिन्नपि कियान्पाठभेदस्तव्द्याख्यानावसरे दर्शित एव। तत्रोपयोगी श्लोकः पठ्यते—

"दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः।
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः"।

जागरितावस्थायामेव विश्वादीनां त्रयाणामनुभवप्रदर्शनार्थं श्लोकः। दक्षिणमक्ष्येव मुखं यस्य स तथोक्तस्तस्मिन्सर्वेषु करणेष्वविशेषेऽपि दक्षिणेऽक्षण्युपलब्धिपाटवदर्शनात्तत्र विशेषनिर्देशे विश्वस्य दक्षिणाक्षिगतो रूपं दृष्ट्वा निमीलिताक्षस्तदेव स्मरन्मनस्यन्तः स्वप्न इव वासनारूपमभिव्यक्तं पश्यति यथाऽत्र तथा स्वप्नेऽतो मनस्यन्तस्तु तैजसो विश्व एवाऽऽकाशो बाह्यादिस्मरणव्यापारोपरमे प्राज्ञ एकीभूतो घनप्रज्ञ एव भवति मनोव्यापाराभावात्। दर्शनस्मरणे एव हि मनःस्पन्दितं तदभावे हृद्येवाविशेषेण प्राणात्मनाऽवस्थानात्प्राणः। प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति श्रुतेः। तैजसो हिरण्यगर्भः। मनस्यवस्थितत्वाल्लिङ्गं मनः। यत्र मनोमयोऽयं पुरुष इत्यादिश्रुतिभ्यः। ननु व्याकृतः प्राणः सुषुप्ते तदात्मकानि कारणानि भवन्ति कथमव्याकृतता। नैष दोषः। अव्या-

न बहिष्प्रज्ञं नान्तःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमलिङ्गमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं

---

कृतस्य देशकालविशेषाभावात् । यद्यपि प्राणाभिमाने सति व्याकृततैव प्राणस्य तथाऽपि पिण्डपरिच्छिन्नविशेषाभिमाननिरोधः प्राणे भवतीत्यव्याकृत एव प्राणपरिच्छिन्नाभिमानवतां यथा प्राणलये परिच्छिन्नाभिमानिनां प्राणेऽव्याकृतता तथा प्राणाभिमानिनोऽप्यविशेषापन्नत्वादव्याकृतता समाना । प्रेणववीजात्मकत्वं च तदध्यक्षश्चैको व्याकृतावस्थः परिच्छिन्नाभिमानाध्यक्षाणां च तेनैकत्वमिति पूर्वोक्तं विशेषणमेकीभूतः प्रज्ञानघन इत्याद्युपपन्नं तस्मिन्नुक्तहेतुत्वात्प्राणशब्दत्वमव्याकृतस्य । प्राणबन्धनं हि सोम्य मन इति श्रुतेः । एवं तावत्प्रभवाप्ययौ हि भूतानामित्यनेनैकविज्ञाने सर्वविज्ञानप्रतिज्ञा प्रदर्शिता । तथा माण्डूक्यश्लोके जागरितावस्थायामेवावस्थात्रयमुक्तं तस्यामेवावस्थायां तत्रैविध्ये मनोव्यापारं व्यावृत्य प्रागुक्तोपास्ये मनोव्यापारं प्रवर्तयितुमुपास्यस्वरूपमाह—न बहिष्प्रज्ञमिति । बहिर्विषयव्यापारोपरमाज्जागरितावस्थाप्रतिषेधान्मनसो हि स्वस्मिन्व्यापारेणान्तःप्रज्ञत्वे तैजसत्वे च प्रत्यगात्मनः प्राप्ते तन्निषेधति—नान्तःप्रज्ञमिति । उभयत्र व्यापारप्रतिषेधेन तदन्तरालव्यापारे प्राप्ते तं निषेधति—नोभयतःप्रज्ञमिति । जाग्रत्स्वप्नान्तराले मनो व्यावृत्तं प्रज्ञार्थं न कुर्यादित्यर्थः । अन्तरालप्रतिषेधेनोभयत्र युगपत्प्रज्ञार्थं व्यापारे प्राप्ते तं निषेधति—न प्रज्ञमिति । एवं सर्वतो मनोव्यापारप्रतिषेधादज्ञानसाक्षिके स्वप्ने प्राप्ते तं निषेधति—न प्रज्ञानघनमिति । अथ पदप्रतिषेधैः प्रणवविद्याङ्गभूतैरुपास्यप्रतिकूलं प्रतिषिध्य व्यावृत्य यदुपास्ये मनोऽव्यावृत्तं कार्यं तदुपास्यं निर्दिशति—अदृष्टमिति । न हीदृशमुपास्यं कचिद्दृष्टं पुरुषाकारमेव वा तिर्यगाकारमेव वा यथा गोपालकूर्मादि । तत्तूभयरूपं नृसिंहात्मकं त्रिनेत्रं पिनाकहस्तमिति । अत एवाव्यवहार्यम् । अत एवालक्षणमिति । न लक्षणं लिङ्गं विद्यते यस्य तदलक्षणम् । अत एवाचिन्त्यमनुमानेन तर्केण वा । अत एवाव्यपदेश्यं नियताकारोपास्यप्रतिपादकैः शब्दैः । अत एवैकात्मप्रत्ययसारमेकस्मिन्सर्वेषामात्मनां प्रत्यय एकात्मप्रत्ययः स एव सारं यस्यं तत्तथोक्तम् ।

---

१ घ. ङ. छ. 'माचि' । २ ङ. प्रसव' ।

प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ १ ॥ अथ सावित्री गायत्री या यजुषा प्रोक्ता तया सर्वमिदं व्याप्तं घृणिरिति द्वे अक्षरे सूर्य इति त्रीण्यादित्य इति त्रीण्येतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तं य एवं वेद श्रिया हैवाभिषिच्यते तदेतदृचाऽभ्युक्तम्—ऋचो

---

अथवैक एवाऽऽत्मोपास्योपासकयोरित्येवं प्रत्ययः। शेषं पूर्ववत्। अत एव प्रपञ्चोपशमं प्रागुक्तेन न्यायेन मनसो हि बाह्यदर्शनस्मरणव्यापाराभावाद्व्याप्तत्वाच्च स्वापाभावादित्युपास्यव्यतिरेकेण प्रपञ्चाप्रतीतेः प्रपञ्चोपशममिति। शिवं शंकरं चतुर्थं तुरीयपादं मन्यन्तेऽर्धमात्रानादात्मकमिति तथोपास्यम्। प्रत्यगात्मतयोपास्यमाह—स उपास्य आत्मा प्रत्यगात्मेत्येवं विज्ञेयो द्रष्टव्यः॥ १॥

एवमियं प्रणवविद्यापदप्रतिषेधवती सप्तशक्तिकहृदयाङ्गबीजमुखवत्यङ्गिना[2] मनोव्यापारं स्थिरं कुर्वत्यस्यां विद्यायामुपकारकवत्यसकृदावर्तनीयोमुपासकेनेति तात्पर्यार्थः। एवं तावत्सामाङ्गप्रणवविद्यां नृसिंहब्रह्मविद्योपकारिणीमभिधायाथेदानीं तदुपकारिणीमेव शिरोङ्गव्याख्यात्रीं सामाङ्गसवितृप्रतिपाद्यां विद्यां नृसिंहब्रह्मविद्याङ्गभूतामाह—अथ सावित्री गायत्रीति। अथशब्दः क्रमप्राप्तानन्तर्यार्थः। मन्त्रे सवितृपदाभावेऽपि सावित्रीति वदन्सवितृकालीनप्रकाशवत्सुषुप्तप्रकाशवच्च बाह्यान्तरतमोनिर्हारकप्रकाशवदयं शिरोङ्गप्रकाशो निबिडाविद्यानिवर्तक इति दर्शयति। गायत्र्यष्टाक्षरत्वात्तां गायत्रीं यजुषा व्याचष्टे या यजुषा प्रोक्ता तया सर्वमिदं व्याप्तम्। शिरोङ्गं व्याख्यातमुपास्यं च। अक्षराणि गणयति। घृणिरिति द्वे अक्षरे। सूर्य इति त्रीणि पृथग्रेफगणनात्। आदित्य इति त्रीणि। एतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तमिति। श्र्यादिभिस्तदादिन्यायेन सप्तभिः शक्तिभिर्विग्रहवतीभिर्मणिगणखचितैर्हेमकुम्भैरमृतपूर्णैः शिरोऽभिषिक्तमित्यर्थः। य उपासक एवमुपास्ते तस्य फलं निर्दिशति। श्रिया हैवाभिषिच्यते प्रागुक्ताभिः शक्तिभिः प्रागुक्तेन प्रकारेण सोऽप्यभिषिच्यत इत्यर्थः। तदेतदृचाऽभ्युक्तमुक्तार्थम्। ऋचो निषे-

---

१ क. °मं शान्तं शि°। २ ज. °ङ्गिनां म°।

**अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति । न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थोऽस्ति यः सावित्रं वेदेति । ॐ भूर्लक्ष्मीर्भुवर्लक्ष्मीः सुवःकालकर्णी ।**

---

दुर्नितरां सेवनं कृतवत्यः। ऋग्ग्रहणमुपलक्षणार्थम् । यद्वा ऋच इति षष्ठी । ऋचः सईमित्यादिकाया नयाः प्रतिपादिताः शक्तयो वेदा वा न केवलं शक्तयोऽपि तु विश्वे देवाः सर्वे देवा अधीत्युपरि शिरस्यक्षरे न क्षरति न विलीनं भवति परमे व्योमन्व्योमनि सर्वाभिषेकद्वारत्वात्परमं मोक्षद्वारत्वाच्च व्योम यस्मिञ्शिरसि । य उपासकस्तच्छिरो वेददेवदेवीभिः प्रागुक्तेन प्रकारेणाभिषिक्तं न वेद न जानाति किमृचर्ग्वेदादिना । यद्वा सईपाहीत्यनयर्चा किं करिष्यति । य इदित्थमेव तदभिषिक्तं शिरो विदुरुपासते त इम उपासकाः समासते सम्यक्प्रकारेणाऽऽसते सुखिन इत्यर्थः । ऋग्गतमृक्पदं व्याचष्टे। न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थः प्रयोजनमस्ति यः सावित्रीं शिरःशिखां साधनभूतां वेदेति । ततश्चायमर्थः । अष्टाक्षरां सावित्रीं पठित्वा प्रागुक्ताः सर्वे वेददेवादयोऽभिषिञ्चन्तीति सावित्रस्याष्टाक्षरं पदमष्टावक्षराण्यभिषेचनाय यस्मिञ्शिरसि तदष्टाक्षरं शिरस्तदेव पदमाश्रय इति तत्त्वार्थः । एवं तावन्नृसिंहब्रह्मविद्यां शिरोङ्गोपकारिणीं सावित्राभिषेचनीं विद्यामभिधायाथेदानीं तदुपकारिणीं शिखाङ्गद्वारा सामाङ्गमहालक्ष्मीविद्यामाह—ॐ भूर्लक्ष्मीरिति । प्रणवविद्यापुरःसरा एताः शक्तयो भूरित्याद्या व्याहृतयः । भूः । भू सत्तायामिति सत्तायामत्र वर्तते। अत एवोक्तमस्माभिः सप्तव्याहृतीर्व्याचक्षाणैः प्रपञ्चसारे—

> "भूपदात्तु व्याहृतयो भूःशब्दः सति वर्तते ।
> तत्पदं सदिति प्रोक्तं सन्मात्रत्वाच्च भूरतः ॥
> भूतत्वात्कारणत्वाच्च भुवःशब्दस्य संगतिः ।
> सर्वस्य स्वीकरणात्स्वात्मतया स्वरितीरितम् ।
> महत्त्वाच्च महत्त्वात्मा महच्छब्दः समीरितः" ॥

ततश्च यथासंख्यं भूर्लक्ष्मीरिति । सन्मात्रब्रह्मणो व्यापारिका शक्तिर्भूर्लक्ष्मीरित्युच्यते । कारणमात्ररूपस्य ब्रह्मणः शक्तिर्भुवर्लक्ष्मीरिति । सर्वत्र स्वात्मतयाऽवस्थितस्य ब्रह्मणः शक्तिः सुवःकालकर्णीत्युच्यते । महाभूतमकाशकात्म-

तन्नो महालक्ष्मीः प्रचोदयादित्येषा वै महालक्ष्मीर्यजुर्गायत्री चतुर्विंशत्यक्षरा भवति गायत्री वा इदं सर्वं यदिदं किंच तस्माद्य एतां महालक्ष्मीं याजुषीं वेद महतीं श्रियमश्नुते । ॐ नृसिंहाय विद्महे वज्रनखाय धीमहि । तन्नः सिंहः प्रचोदयादि-

कस्य भुवर्ब्रह्मणः शक्तिर्महालक्ष्मीरिति । सैकैका शक्तिस्तदङ्गं शिखाख्यं तेजोमयं सुषुम्नामृतमयं सोमरूपेणोपास्यत्वात्तस्य पादस्य । य ओषधीनां प्रभवति तारापतिः सोमस्तत्सान्नस्तृतीयं पादं जानीयादिति श्रुतेः । सोमश्चन्द्रः सुषुम्णः सूर्यरश्मिश्चन्द्रमा इति श्रुतेः । नोऽस्मान्प्रचोदयादिति चुद प्रेरणे प्रेरयतु । तदङ्गमेकैका विग्रहवती शक्तिरमृतस्रवणाय प्रेरयतु । अभिषेक्त्रीणां शक्तीनां शिखाधिष्ठात्रीः शक्तीः प्रत्यनयर्चा गायत्र्या यजुर्महालक्ष्म्याः प्रार्थनारूपं वचनम् । ततश्च तदङ्गममृतस्राव्यमृतरूपमुपास्यमिति । अथवा सैकैका शक्तिस्तदङ्गं नः प्रचोदयादिति नः प्रेरयतु । असंविवादमेवाङ्गं कुर्यादिति । एषा वै महालक्ष्मीर्यजुर्गायत्री महतीनां महालक्ष्म्यादीनां प्रतिपादकत्वान्महालक्ष्मीः सावित्रमन्त्रे । अत्र च यजुरिति वदन्सामाङ्गत्वेऽपि गीतिरहितमङ्गद्वयमिति दर्शयति । प्रणवान्तर्भावायाक्षराणि गणयति । *चतुर्विंशदक्षरा भवतीति । चतुर्विंशादिति च्छान्दसम् । गायत्री वा इदं तृतीयमङ्गं सर्वं कृत्स्नं यदिदं किंच । यस्मादेवं तस्माद्य एतां शिखां पारमेश्वरीं महालक्ष्मीं याजुषीं प्रागुक्तविग्रहशक्त्युपास्यां वेदोपास्ते । तस्य फलं निर्दिशति—महतीं श्रियमश्नुत इति । महतीं श्रियं प्राप्नोतीत्यर्थः । एतद्गायत्र्युक्ताः शक्तयो विग्रहवत्योऽभिषेचनशक्तीनामुपकारायामृतमयीं शिखाममृतस्रवणाय तद्बन्धनाय वोपास्त इति तत्त्वार्थः । एवं तावन्नृसिंहब्रह्मविद्योपकारिणीं सामाङ्गतृतीयाङ्गविद्यामभिधायाथेदानीं सामाङ्गचतुर्थाङ्गविद्यां नृसिंहगायत्रीमाह । ॐ प्रणवो व्याख्यातस्तदङ्गं कवचाख्यं पारमेश्वरम् । धीमहीति । ध्यायेमहि । किमर्थं वज्रनखाय नृसिंहाय । तादर्थ्ये चतुर्थी । तदर्थं विद्महे जानीमो यतस्तदेवाङ्गं नोऽस्मान्सिंहः प्रचोदयादित्युक्तार्थम् । नरशब्दं विहाय सिंह इति वदंस्तस्यां विद्यायां सिंहाकारस्य प्राधान्यं दर्शयति ।

* आदर्शपुस्तकेषु तु चतुर्विंशत्यक्षरेत्येव पाठो दृश्यते ।

१ क. एवमेतां ।

त्येषा वै नृसिंहगायत्री वेदानां देवानां निदानं भवति य एवं वेद स निदानवान्भवति ॥ २ ॥ देवा ह वै प्रजापतिमब्रुवन्नथ कैर्मन्त्रैर्देवः स्तुतः प्रीतो भवति स्वात्मानं दर्शयति तन्नो ब्रूहि भगव इति स होवाच प्रजापतिः । *ॐ उं ओं यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः १ ॐ ग्रं ॐ यो वै नृसिंहो देवो भगवान्यश्च विष्णुस्तस्मै वै नमो नमः २ ॐ वीं ॐ यो वै नृसिंहो देवो भगवान्यश्च महेश्वरस्तस्मै वै नमो नमः ३ ॐ रं ॐ यो वै नृसिंहो देवो भगवान्यश्च पुरु-

इतिशब्दो मन्त्रसमाप्तिं द्योतयति। एषा वै नृसिंहगायत्री नृसिंहार्थकवचप्रतिपादकत्वाद्गायत्री प्रणवान्तर्भावं दर्शयति। कवचाश्रिततदावृतहृदयान्तर्गतानां वेदानां देवानां यथायोग्यतया निदानं मूलकारणं भवति। उपासकस्य फलं निर्दिशति। य एवं वेद स निदानवान्भवतीति। ततश्चायमर्थः। पारमेश्वरं कवचाख्यमङ्गं हृत्संबन्धि सर्ववेददेवनिदानत्वेनोपास्यं तत्प्रतिपादकत्वादक्संबन्धि सर्ववेददेवनिदानं गायत्र्युच्यत इति तत्त्वार्थः ॥ २ ॥

एवं तावन्नृसिंहब्रह्मविद्योपकारिण्यङ्गचतुष्टयव्यापिनी महाचक्राख्या[ता]पभिधातुं तस्मिंश्चक्रे द्वात्रिंशत्पत्रे यथासंख्यं कृतप्रणवसंपुटे न्यस्तमूलमन्त्राक्षर एकैकस्मिंस्तत्तद्देवता नृसिंहव्यूहं स्तुतिमन्त्रवर्णसामर्थ्यलभ्यं च प्रदर्शयितुं तान्मन्त्रान्प्रश्नोत्तररूपाख्यायिकयाऽऽरभते। देवा ह वै प्रजापतिमब्रुवन्नित्यादि स होवाच प्रजापतिरित्यन्तं स्पष्टार्थम् । अत्र हि सर्वे मन्त्राः प्रणवादिकास्तदादिन्यायेन प्रणवं मूलमन्त्राक्षरं पुनः प्रणवं सर्वेषु मन्त्रेषु दर्शयति। अत्र हि मन्त्रेषु यच्छब्दद्वयेनान्यतः सिद्धमनूद्य कुत्रचिच्छब्दसामर्थ्यात्कुत्रचित्तस्मा इत्येकवचनसामर्थ्या-

* अत्र प्रतिपर्यायमादौ प्रणवस्ततो मूलमन्त्राक्षरं ततः प्रणव इत्ययं क्रमः 'छ.' पुस्तक एव दृश्यते नान्येष्वादर्शपुस्तकेषु ।

१ क. ग. °वन्निति । २ ज. °मर्थ्यं ल° ।

वै नृसिंहो देवो भगवान्यश्च सोमस्तस्मै वै नमो नमः २९ ॐ मां ॐ यो वै नृसिंहो देवो भगवान्यश्च विराट्पुरुषस्तस्मै वै नमो नमः ३० ॐ म्यं ॐ यो वै नृसिंहो देवो भगवान्यश्च जीवस्तस्मै वै नमो नमः ३१ ॐ हं ॐ यो वै नृसिंहो देवो भगवान्यश्च सर्वं तस्मै वै नमो नमः ॥ ३२ ॥

इति तान्प्रजापतिरब्रवीदेतैर्[1]द्वा[2]त्रिंशन्मन्त्रैर्नित्यं देवं स्तुवते ततो देवः प्रीतो भवति स्वात्मानं दर्शयति तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति स सर्वं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेति महोपनिषत्[3] ॥ ३ ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषदि चतुर्थोपनिषत्समाप्ता ॥ ४ ॥

---

पालविग्रहो वसुरुद्रादित्याष्टग्रहपञ्चमहाभूतविग्रहा एकैकस्मिन्नृसिंहव्यूहे यथासंख्यमन्तर्भूता उपास्या इति दश व्यूहा विश्वरूपा उपास्याः । कालमनुमृत्युयमान्तकप्राणसूर्यसोमविराट्पुरुषजीवरूपचेतनाचेतनसर्वात्मका इत्येते व्यूहा अविश्वरूपास्तत्तदसाधारणरूपगम्या एवमेकैकव्यूह उपास्यस्तेन तेन मन्त्रेण स्तुत्यः । ततो देवः स्वात्मानं स्वकीयं रूपं विश्वरूपमविश्वरूपं च यथायोग्यं दर्शयति । यस्मादेवं तस्माद्य उपासक एतैर्मन्त्रैर्नित्यं नियमेन स्तौति स देवं विश्वरूपमविश्वरूपं च पश्यति साक्षात्करोति । सोऽमृतत्वमित्यादि महोपनिषदित्यन्तं स्पष्टार्थम् । तत्रामृतत्वं च गच्छतीति फलस्य द्विरभ्यासः स्तुतिमात्रादेव परमफलावाप्तिं मन्त्राणां च सामर्थ्यं दर्शयति । महोपनिषच्छब्दः प्रणवबाहुल्यमिति सर्वं निर्मलम् ॥ ३ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत आद्यकृतावाथर्वणनृसिंहपूर्वतापनीयोपनिषद्भाष्ये चतुर्थोपनिषद्भाष्यं संपूर्णम् ॥ ४ ॥

---

१ क. °देभिर्द्वा° । २ घ. ङ °तैर्मन्त्रै° । ३ क. °त् । य एतमेतां महोपनिषदं वेद सकृत्पुरश्चरणो भवति महाविष्णुर्भवति । इ° ।

देवा ह वै प्रजापतिमब्रुवन्महाचक्रं नाम चक्रं नो ब्रूहि भगव इति सार्वकामिकं मोक्षद्वारं यद्योगिन उपदिशन्ति स होवाच प्रजापतिः षडरं वा एतत्सुदर्शनं महाचक्रं तस्मात्षडरं भवति षट्पत्रं[१] चक्रं भवति

एवं तावच्चतुर्थोपनिषदन्ते स्तुत्योपनिषदा महाचक्रस्थद्वात्रिंशत्पत्रेषु यथासंख्यं द्वात्रिंशन्नृसिंहस्तुत्योपास्यानभिधायाथेदानीं महाचक्रविद्यामभिधातुं महाचक्रस्वरूपं निरूपयितुं प्रश्नोत्तररूपाख्यायिकया पञ्चमोपनिषदारभ्यते—देवा ह वै प्रजापतिमब्रुवन्निति । नन्वेवं तर्हि स्तुत्युपनिषद्विद्यातो महाचक्रविद्यया प्राग्भवितव्यम् । अत्रोच्यते । सत्यम् । यदीयं प्राक्स्यात्पुरश्चरणार्थमितरत्सुदर्शनादिमहाचक्रं सद्वात्रिंशद्व्यूहकं पञ्चमाङ्गमित्येवं विभागः प्रतीयेतातस्तद्विभागज्ञापनार्थं न प्रागभिहितेयमिति । नन्वेवमपि तदादिन्यायेन महाचक्रविद्या पुरश्चरणार्थं कृत्स्नैव कस्मान्न गृह्येत । तन्न । तदादिन्यायवैषम्यात् । न हि महाचक्रस्यायमादिर्द्वात्रिंशद्व्यूहो नामापि तु नाभिवर्तिक्षीरोदार्णवसंबन्धिनृसिंहव्यूहस्तस्मात्सूक्तमुपनिषद्विद्यातः प्रागभिधानमस्या इति । देवाः प्राक्स्तुतिश्रवणेनात्यन्तहर्षिताः प्रजापतिमब्रुवन्महाचक्रं नामैतन्नामधेययुक्तं चक्रम् । यद्वैतन्नामधेययुक्तमेव चक्रं वर्तुलमुत्तराधरभावेन स्थितं सचतुष्टयाङ्गव्यापकमन्त्राख्यमङ्गं नोऽस्मभ्यं ब्रूहि । भगवो भगवन्निति संबोधनम् । सार्वकामिकं सर्वकामसाधनत्वात्सार्वकामिकम् । अथवा सर्वेषां देवानां ब्रह्मादीनां व्यूहाः स्वात्मतयैव स्वभावतयैव कामिता यस्मिंश्चक्रे नाभिवर्त्याद्यव्यूहेन तत्सार्वकामिकम् । अत एव मोक्षद्वारं प्रणवबहुलत्वान्मूलमन्त्राक्षरसंख्यातः प्रणवसंपुटीकरणात्प्रणवाक्षरसंख्या द्विगुणा चतुःषष्टिः । अस्यां च विद्यायां मोक्षः प्रणवद्वारक एव । देहान्ते देवः परं ब्रह्म तारकं व्याचष्ट इति श्रुतेः । ततश्चायमर्थः । मोक्षस्य प्रणवाख्यं द्वारं यस्मिंस्तत्तथोक्तम् । यच्चक्रं योगिन उपदिशन्त्युपासकेभ्यः । स होवाच प्रजापतिरित्युक्तार्थम् । षडरं वा एतत्सुदर्शनं महाचक्रं महाचक्रस्यैव नामान्तरं सुदर्शनमन्त्रयोगात्सुदर्शनम् । यद्वा सुष्ठु दर्शनं विद्यते यस्मिंस्तथोक्तम् । एतत्पत्राधोभागे नालरूपोऽरशब्दवाच्यः । षडरा विद्यन्ते यस्मिंस्तत्षडरं यस्मादेवं तस्मात्षडरं भवति षट्पत्रं भवति । अरादुपरिभागः कोणत्रययुक्तः पत्राकृतिः पत्रं षट्पत्राणि विद्यन्ते यस्मिंस्तत्तथोक्तम् । एतदेव स्तौति ।

१ क. 'वषानुष्टुभस्य मन्त्रराजस्य म' । ङ. 'वषानुष्टुभस्य मन्त्रराजस्य नारसिंहस्य म' ।
२ क. ग. 'डक्षरं । ३ ग. छ. 'त्रं भ' ।

षड्वा ऋतव ऋतुभिः संमितं भवति मध्ये नाभिर्भवति नाभ्यां वा एतेऽराः प्रतिष्ठिताः। मायया वा एतत्सर्वं वेष्टितं भवति नाऽऽत्मानं माया स्पृशति तस्मान्मायया बहिर्वेष्टितं भवति। अथाष्टारमष्टपत्रं चक्रं भवत्यष्टाक्षरा[1] वै गायत्री गायत्र्या संमितं भवति बहिर्मायया वेष्टितं भवति क्षेत्रं क्षेत्रं वा मायैषा संपद्यते। अथ द्वादशारं द्वादशपत्रं चक्रं भवति द्वादशाक्षरा वै जगती जगत्या संमितं भवति बहिर्मायया वेष्टितं भवति। अथ षोडशारं षोडशपत्रं चक्रं भवति षोडशकलो वै पुरुषः पुरुष एवेदं सर्वं पुरुषेण संमितं भवति[2]

षड्वा ऋतव ऋतुभिः संमितं भवति। एतस्मादर्थवादादराः पत्राणि चर्तुबुद्ध्योपास्यानि भवन्ति। अराणां प्रतिष्ठार्थं स्थानमाह। मध्ये चक्रस्य मध्ये नाभिर्वर्तुलाकारा भवति। नाभ्यां वैतेऽराः प्रतिष्ठिताः प्रागुक्तास्तदादिन्यायेन पत्राणि। मायया प्रागुक्तेन मूलमन्त्रशक्त्यक्षरेणैतत्षडरं षट्पत्रं सर्वं वेष्टितं भवति। यस्मान्नाऽऽत्मानं चक्रस्य स्वरूपमरपत्रात्मकं माया स्पृशति तस्मान्मायया बहिर्वेष्टितं भवति। यद्वा प्रत्यक्चैतन्यमेव केवलं शुद्धं चक्रबुद्ध्योपास्यं यस्मात्तस्मादात्मानं प्रत्यक्चैतन्यं न माया स्पृशति मायाविनमिव तस्मान्मायया बहिर्वेष्टितं भवति। अष्टारमष्टपत्रं चक्रं द्वादशारं द्वादशपत्रं चक्रं षोडशारं षोडशपत्रं चक्रं द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रमिति चतुष्टयं षडरं षट्पत्रचक्रेण व्याख्यातम्। तत्रायं विशेषः। आद्यपत्रेऽराः पत्राणि चर्तुबुद्ध्योपास्यानि। द्वितीयतृतीयपञ्चमेष्वरा वेदबुद्ध्योपास्याः पत्राणि गायत्रीजगत्यनुष्टुबुद्ध्या यथासंख्यमुपास्यानि। वेदा एवाराश्छन्दांसि वै पत्राणीत्यर्थवादात्। चतुर्थे पत्रे षोडशाराः षोडशपत्राणि च षोडशकलाबुद्ध्योपास्यानि। क्षेत्रं क्षेत्रं वा मायैषा संपद्यते। पुरुष एवेदं सर्वं पुरुषेण संमितं भवतीति वाक्चैतन्यं

१ छ. °ष्टाक्षर°। २ क. °ति बहिर्मायया वेष्टि°।

मायया बहिर्वेष्टितं भवति । अथ द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रं भवति द्वात्रिंशदक्षरा वा अनुष्टुबनुष्टुभा संमितं भवति बहिर्मायया वेष्टितं भवत्यरैर्वा एतत्सुबद्धं भवति वेदा वा एतेऽराः पत्रैर्वा एतत्सर्वतः परिक्रामति च्छन्दांसि वै पत्राणि ॥ १ ॥

---

शुद्धमाह माययाऽसंस्पृष्टं बहिःशब्दात् । तादृशं चक्रं तस्मिन्प्रकल्प्य तदुपास्यमित्यर्थः । तथाचारपत्रशब्दाद्बहिःशब्दाच्च सबिन्दुकेन शक्त्यक्षरेण यद्वेष्टनं तद्यथासंख्यं पूर्वपूर्वचक्रापरपत्रासंस्पृष्टमुत्तरोत्तरचक्राणामाश्रयत्वेन नाभिरूपमेवं सुदर्शनचक्रपत्रासंस्पृष्टं यद्वेष्टनं मायया तदुपरितनाक्षरनारायणचक्राश्रयत्वेन नाभिरूपमेवमष्टाक्षरवेष्टनं द्वादशाक्षरस्य नाभिरूपं द्वादशाक्षरवेष्टनं सबिन्दुकमातृकाषोडशाक्षरस्य नाभिरूपं सबिन्दुकाद्यमातृकाषोडशाक्षरवेष्टनं द्वात्रिंशदक्षरस्य नाभिस्ततो द्वात्रिंशदक्षरवेष्टनमसंस्पृष्टमनाभिरूपमेवेत्येवं सुदर्शननारायणवासुदेवषोडशारद्वात्रिंशदरचक्राणां यथासंख्यं पञ्च नाभयो नाभीनामेवापेक्षया वेष्टनरूपतेत्याद्यो नाभिर्मायाक्षररहित उपरितना नाभयोऽन्त्यं च वेष्टनं मायाक्षरेणेति तत्त्वार्थः । नन्वेवं तर्ह्यथशब्दस्य तत्र तत्र प्रयोगात्पूर्वचक्रसंस्पर्शात्पञ्चनाभिकानि पञ्च चक्राणि पृथक्प्रयोज्यानि कस्मान्न परिगृह्यन्ते । तथाचैकचक्रत्वेऽप्यमायिनो भूतनाभिकल्पनायां वेष्टनव्यतिरिक्तपञ्चनाभिकल्पना कस्मान्न भवति । अत्रोच्यते । महाचक्रं नाम चक्रं नो ब्रूहीत्युपक्रम्य तद्वा एतन्महाचक्रमित्युपसंहारान्महाचक्रैकतावगमाच्च चक्रचतुष्टयं तदन्तर्गतमेवेत्यवगम्यते । तत्र तत्राथशब्दप्रयोगस्तत्तच्चक्रोद्धारे माङ्गलिकप्रदर्शनार्थः । तथा वेष्टनानां नाभिकल्पनायां प्रतिषेधाभावाद्योग्यत्वाच्च कल्पनालाघवाच्च न पृथगुभे कल्पने इति । यत्र क्वचिद्बहिःशब्दपूर्वको मायाशब्दः पठ्यते क्वचिद्विपर्ययस्तत्रायमभिप्रायः । यत्र मायाशब्दाद्बहिःशब्दः पूर्वस्तत्र मायाविशेषणं बहिर्भूतया मायया बहिर्मायया । यत्र च मायाशब्दात्परो वेष्टनशब्दात्पूर्वो बहिःशब्दस्तत्राविशिष्टया मायया तत्र बहिःशब्दो न मायाविशेषणं किंतु वेष्टनविशेषणम् । माया हि द्विविधा नारसिंहमूलमन्त्रगता सबिन्दुकेकाररूपा निरुपपदान्मायाशब्दात्प्रतीयतेऽन्या तु रेफहकाराभ्यां मिलितस-

---

१ क. °सुदर्शनं भ° ।

**तदेव चक्रं सुदर्शनं महाचक्रं तस्य मध्ये नाभ्यां तारकं भवति यदक्षरं नारसिंहमेकाक्षरं तद्भवति षट्सु पत्रेषु षडक्षरं सुदर्शनं भवत्य-**

बिन्दुकेकाररूपा सोपपदान्मायाशब्दात्प्रतीयते। ततश्च मूलमन्त्राद्बहिर्भूतमायया ह्रीमित्येवंरूपया वेष्टितं भवतीति तत्त्वार्थः। ततः सुदर्शनचक्रे मूलमन्त्रगतमायया वेष्टनं षोडशचक्रेऽप्येवमेव बहिःशब्दस्य वेष्टनात्पूर्वमुपादानाद्वेष्टनविशेषणं बहिःशब्दो मध्यवेष्टनव्यावृत्त्यर्थः। नारायणवासुदेवनारसिंहचक्रेषु व्याख्यातबहिर्मायया वेष्टनमिति वेष्टनचक्रोद्धारविवेकः॥ १॥

एवं महाचक्रस्य संवेष्टनमुद्धारं चाभिधायाथेदानीमुद्धृतचक्रे यथाविहितमन्त्रान्न्यसितुं तन्नाभ्यामक्षरन्यासमाह—तदेव चक्रं सुदर्शनं महाचक्रमिति। तच्छब्देन द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रमेवशब्देन तदेवावधृत्य तदेव चक्रं तदादिन्यायेन सुदर्शनादिशब्दैरूर्ध्वं चक्रचतुष्टयमपि महाचक्रात्मकमिति दर्शयति। महाचक्रमिति सामानाधिकरण्याच्च। तस्य मध्ये महाचक्रस्य मध्ये मध्यवर्तिनाभ्यां वेष्टनरूपा हि नाभयो भ्रूमध्यास्ता व्यावर्तयितुं मध्ये नाभ्यामित्युक्तम्। तारकं भवति संसारतारकत्वात्तारकं प्रणवाक्षरं भवति। यदक्षरं नारसिंहमेकाक्षरं तद्भवतीत्यक्षरम्। जगद्धितं वा एतद्रूपमक्षरमिति नृसिंहपदं व्याख्यातं तदक्षरशब्दात्प्रत्यभिज्ञायते। तथा नारसिंहमिति तद्धितात्सामप्रभृत्युपास्यं सर्वं प्रतीयते। ततः सर्वस्मिन्नुपास्ये प्रतीत एकमेवोपास्यं मूलनृसिंहव्यूहाख्यं वक्तुं विशिनष्टि—एकाक्षरं तद्भवतीति। यदक्षरं नारसिंहमुपास्यमित्यनूद्य तदेकं भवतीत्यक्षरं चेति महाचक्रमध्यनाभिवर्तित्वेन क्षीरोदार्णवसंबन्धितयोपासनं विधीयत इत्यर्थः। तत्र केचिन्नारसिंहमेकाक्षरमितिविशेषणोपादानादेकाक्षरनृसिंहमिश्रितप्रणवो नाभ्यां न्यसनीय इत्याचक्षते तदपि सांप्रदायिकत्वान्न विरुद्धम्। तस्मिन्नपि पक्षे नारसिंहमिति तद्धितादेकाक्षरो नृसिंहमन्त्रः प्रणवमिश्रितो द्वात्रिंशन्नृसिंहव्यूहं विहाय यावत्प्राकरणिकं मूलनृसिंहव्यूहगतमुपास्यं प्रतीयत एव। ततश्चैतद्विद्याङ्गमेकाक्षरो नृसिंहमन्त्रो यथोक्तोपास्याभिधायकत्वात्तस्य केवलः प्रणवेन विकल्प एकाक्षरनृसिंहमन्त्रस्य प्रणवस्तु नियत एवेति तत्त्वार्थः। अत ऊर्ध्वं तत्तन्मन्त्रन्यासे तत्तच्चक्रेषु पत्रग्रहणमरतदन्तरालपत्रान्तरालव्यावृत्त्यर्थं द्रष्टव्यम्। षट्सु पत्रेषु सुदर्शनं भवति। ऐशानपत्रमारभ्य षड-

१ क. ङ. 'देवत्सुदं'।

ष्टसु पत्रेष्वष्टाक्षरं नारायणं भवति द्वादशसु पत्रेषु द्वादशाक्षरं वासुदेवं भवति षोडशसु पत्रेषु मातृकाद्याः सबिन्दुकाः षोडश कला भवन्ति द्वात्रिंशत्सु पत्रेषु द्वात्रिंशदक्षरं मन्त्रराजं नारसिंहमानुष्टुभं भवति तदा एतत्सुदर्शनं महाचक्रं सार्वकामिकं मोक्षद्वारमृङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवति तस्य पुरस्ताद्वसव आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वे देवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यां

---

क्षरः सुदर्शनो मन्त्रो न्यसनीय इत्यर्थः । एवमुत्तरेषु पत्रेषु योज्यम् । अष्टसु पत्रेष्वष्टाक्षरं नारायणं भवति । प्रणवान्तर्भावेनाष्टाक्षरतेति केचित् । तद्वदेव द्वादशपत्रेषु द्वादशाक्षरं वासुदेवं भवतीति । अत्रापि द्वादशाक्षरता पूर्ववत् । षोडशपत्रेषु मातृकामन्त्रवर्णस्याऽऽद्या वर्णमातृकाद्याः सबिन्दुका बिन्दुसहिताः षोडश भवन्ति । द्वात्रिंशत्सु पत्रेषु द्वात्रिंशदक्षरं सामाभिव्यक्तं मन्त्रराजमानुष्टुभं भवति । मूलमन्त्रस्यैकैकमक्षरम् । यत्त्वेकैकमक्षरमेकैकस्मिन्पत्रे तत्प्रणवसंपुटितं कार्यं प्रत्यक्षरमुभयत ओंकारो भवतीति श्रुतेः । तदस्त्राख्यमङ्गं महाचक्रमुपासितं तन्निक्षिप्तमनिष्टे वस्तुनि त्रासकारित्वात्तदस्त्रं पञ्चममङ्गम् । अत एवास्त्राङ्गमन्त्रं व्याचक्षाणैरस्माभिरुक्तं प्रपञ्चसारे—

"असुत्रासादिकौ धातू स्तः क्षेपचलनार्थकौ ।
ताभ्यामनिष्टमाक्षिप्य क्षिप्यते फडस्त्वडग्निना" इति ।

सार्वकामिकं मोक्षद्वारमित्युक्तार्थम् । ऋङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवतीति पञ्च मयट्प्रत्ययाः प्राचुर्यार्था ग्राह्याः । ऋग्यजुःसामाथर्वप्रचुरम् । ब्रह्ममयमिति ब्रह्मशब्देनाथर्ववेदः सोऽयं ब्रह्म वेद इत्येतद्ब्राह्मणाभिधानात् । वेदप्रचुरताऽराणां वेदबुद्ध्योपास्यत्वात् । विकारार्थो वा मयड्वेदविकारात्मका इत्यर्थः । अमृतमयं क्षीरप्रचुरनाभिकं क्षीरविकारनाभिकं वेति । तस्येति तच्छब्देनाभिस्थो विष्णुर्मूलनृसिंहव्यूहः परामृश्यते । तत्परिचारकान्देवानाह—पुरस्ताद्वसवः परिचारका आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वे देवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यामिति । एवं दिङ्नाभिपरिचारकानुक्त्वाऽथेदानीं

---

१ क. °शप° । २ क. °शप° । ३ क. °शत्पत्रे° । ४ छ. तस्मादेतन्महा° । ५ क ग. घ. °त्सुमहा° । ६ झ. °स्त्राख्यामन्त्रं महा° ।

सूर्याचन्द्रमसौ पार्श्वयोस्तदेतदृचाऽभ्युक्तम्— ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः। यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति। तदेतन्महाचक्रं बालो वा युवा वा वेद स महान्भवति स गुरुर्भवति स सर्वेषां मन्त्राणामुपदेष्टा भवत्यनुष्टुभा होमं कुर्यादनुष्टुभाऽर्चनं

पार्श्वपरिचारकानाह—सूर्याचन्द्रमसौ पार्श्वयोः कुक्षिप्रदेशयोरिति यावत्। तदेतन्महाचक्रमृचाऽभ्युक्तम्। यस्मिन्महाचक्रे। अक्षरे। अशू व्याप्तावित्यस्य रूपं सरो मत्वर्थे। तस्मिन्व्याप्तिमति। परम उत्कृष्टे व्योमवत्सर्वव्यापकत्वेन स्थिते। अधीत्युपरिभावे। ऋच इत्यृग्ग्रहणमुपलक्षणार्थम्। ऋचो निषेदुः स्थिताः। यदि वर्च इति षष्ठी। अनुष्टुप्संबन्धिन्यक्षरे व्याप्तिमति चक्रे सर्वे वेदाः स्थितास्तत्सुदर्शनमन्त्रादिसंबन्धि चक्रमित्यर्थः। य उपासकस्तन्महाचक्रं न वेद नोपास्ते किमृचर्ग्वेदादिना यदि वर्चाऽनुष्टुप्छन्दस्कयर्चेति। अनेनैतद्दर्शयति। महाचक्रोपासनगर्भितमेवानुष्टुबुपासनं कुर्यान्न तु तद्रहितमिति। य इत्तद्विदुस्त इमे समासत इत्युक्तार्थम्। इतिशब्द ऋक्समाप्तिं द्योतयति। तदेतन्महाचक्रं बालो वा युवा वा वेदोपास्ते तस्येदं फलं स महान्भवति। महतीं प्रतिष्ठां जने प्राप्नोति। यदि वा महान्महाविष्णुरिति। स गुरुः सर्वैर्देववदाराध्यः। स सर्वेषां मन्त्राणामुपदेष्टा भवत्युपदेशकः। सामाभिव्यक्तानुष्टुभा होमं कुर्यादिति विध्यङ्गोऽयं होमस्तस्मिन्द्रव्यानुपादानात्प्रतिदिनं हविष्यमन्नं साज्यं जुहुयादिति। तथा संख्यानुपादानात्सकृद्द्वादशवारं वा। यदि वा सूत्रागतदशपदानां मूलनृसिंहव्यूहे द्वात्रिंशद्व्यूहे च व्याख्यातत्वादुभयोद्देशेन होमं कुर्यात्। ततश्च क्षीरोदार्णवशायिने नृसिंहाय त्रिनेत्राय पिनाकहस्तायोग्रायेदमिति हुत्वा ब्रह्मादिद्वात्रिंशद्व्यूहात्मकाय नृसिंहायोग्रायेति जुहुयादित्येवं प्रतिपदं मूलमन्त्रावृत्तिः। यद्वाऽनुष्टुभेत्येकवचनात्सकृन्मूलमन्त्रमुच्चार्य स्वाहाकारान्तं जुहुयात्प्रतिपदमुद्दिश्य त्यागः कार्यः। तथा सामाभिव्यक्तानुष्टुभाऽर्चनं षोडशोपचारादि कुर्यादित्यनुषङ्गः। अत्रापि होममन्त्रवन्मन्त्रावृत्त्य नावृत्ती

१ ङ. छ. गुरुः स°। २ ज. °य चक्रपि°। ३ ज. °कवराभयह°।

तदेतद्रक्षोघ्नं मृत्युतारकं गुरुतो लब्ध्वं कण्ठे बाहौ शिखायां वा बध्नीत सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते तस्माच्छ्रद्धया यां कांचिद्दद्यात्सा दक्षिणा भवति ॥ २ ॥

देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य

---

एष्टव्ये । तदेतन्महाचक्रं रक्षोघ्नं मृत्युतारकं गुरुप्रसादाल्लब्धं कण्ठे बाहौ शिखायां वा बध्नीत यस्तस्मै गुरवे यस्मात्सप्तद्वीपवती द्विगुणावृत्ताऽपि पृथ्वी दक्षिणार्थं नावकल्पते तस्माच्छ्रद्धया भक्त्या यां कांचिद्भूमिं यथाशक्त्यनुरूपां दद्यात्सा दक्षिणा भवति । एवं प्रागुक्तं श्रुतित उपासनमवगतं पञ्चाङ्गन्यास उपसंहृतमेकस्मान्मतात् । अथ मतान्तरपर्यालोचनया महाचक्र एवोपसंहृतं तस्मात्प्रत्यक्षरमुभयत ओंकारो भवतीत्यत्र मूलमन्त्राक्षराणां प्रणव उपसंहृतत्वात्प्रणवप्रधानमेवेदं महाचक्रं तस्मिञ्शक्तिबाहुल्यश्रवणान्मायया बहिर्वेष्टितं भवति । बहिर्मायया वेष्टितं भवतीत्यसकृच्छ्रवणादुद्धृतपदव्याख्यानावसरे प्रतिपदं यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानीत्यसकृन्महिमशब्दवाच्याया मायायाः सर्वलोकसर्वदेवात्मभूतानां साधनत्वेन श्रवणात्तद्वेष्टितमायाधारत्वेन यथासंख्यं पृथिव्यादिलोकर्ग्वेदादिवेदाग्न्यादिदेवभूतानामात्मनां च साधनत्वश्रवणान्महाचक्रान्तर्गतवेष्टितमायाधारमेवेदमुपासनम् । न तु मूलनृसिंहगतं पञ्चाङ्गन्यासार्थं चान्तरङ्गत्वान्महाचक्रमेवेदमुपासनम् । तदपि संप्रदायागतमुपादेयमित्युपासनाविकल्पः । तत्रापि बहुतरं संप्रदायानुकूल्यागतत्वादन्त्यमेवोपासनमुपादेयमिति केचित् । तस्मिन्मते प्रणवसावित्रयजुर्लक्ष्मीनृसिंहगायत्रीति मन्त्रचतुष्टयमङ्गसामाभिव्यक्तं यथायोग्यतया महाचक्रप्रकाशकत्वेन योज्यं तथैवोपास्यं महाचक्रमिति रहस्यं तत्त्वं चेति ॥ २ ॥

एवं नृसिंहब्रह्मविद्यां सकलमतानुसारिणीं कृत्स्नामभिधायाथेदानीं तदनुष्ठातुः कैमुत्यन्यायेन फलकथनाय प्रश्नोत्तररूपाख्यायिकामवतारयति—देवा ह वै प्रजापतिमब्रुवन्नित्यादिना । अत्र देवा ह वा इत्याद्यारभ्य तदेतन्निष्कामस्य भवतीत्यन्ता अष्टावध्यायाः प्रत्यध्यायसमाप्तौ च द्विरभ्यासः । देवा ह वै

१ ग. घ. ङ. छ. गुरुणा । २ क. ग. घ. °ण्ठे वा बा° । ३ क. ग. घ. °हौ वा शि° । ४ क. °ध्नीयात्सप्त° । ग. घ. °ध्नीयात्सा स° । ५ क. °ती दक्षि° । ६ च. भूमी दक्षि° । ७ क. ग. घ. °र्थं तावत्कल° । ८ ज. °मू । नत्रा° ।

जस्य फलं नो ब्रूहि भगव इति स होवाच प्रजापतिर्य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स[1] ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स वेदपूतो[2] भवति स सर्वपूतो भवति स सर्वपूतो भवति ॥ इति प्रथमोऽध्यायः ॥ १ ॥

प्रजापतिमब्रुवन्नस्य मन्त्रस्य प्रागुक्तोपासनाविशिष्टस्य फलं नो ब्रूहि भगव इति स होवाच प्रजापतिरित्युक्तार्थम् । यो द्विविधोपासक एतमित्येतच्छब्दपरामृष्टं प्रागुक्तविद्यागर्भितं मन्त्रराजं सामराजं नारसिंहं नृसिंहाकारब्रह्मोपासनागर्भमानुष्टुभमनुष्टुप्छन्दस्कं नित्यमिति साकारब्रह्मप्रतिपत्तिद्वारेण नित्यभूतनिराकारब्रह्मप्रतिपादकत्वान्नित्यमधीत उच्चारयति । यत्रेदृशसाम्नोच्चारणमात्रादेव वक्ष्यमाणफलाप्तिः किं तत्र विद्यानुष्ठानादित्यभिप्रायेण तत्र तत्राधीतेऽधीत इत्यवोचत् । अथवा नित्यमधीत इति नियमेनाधीतेऽथवा नित्यमधीत्युपरिभाव इते जानीते । सर्वे गत्यर्था ज्ञानार्थाः । नित्यं संध्योपासनादि निर्वर्त्योक्तकालं यो विद्यामेतामनुतिष्ठतीत्यर्थः । अथवा नित्यमानुष्टुभमित्यन्वयादानुष्टुभस्य साम्नो नित्यत्वं दर्शयति न त्वितरस्य सामद्वयस्येति । अथवा नित्यं संध्योपासनादि कर्माधिकृत्येते जानीते । एतदुक्तं भवति । ततो नित्यसंध्योपासनाग्निहोत्राद्युपास्यदेवता नारसिंहलीलाविग्रहेत्युपास्ते । एतद्विद्यागर्भितेत्यर्थः । अथवा य उपासकः प्रागुक्तविद्यानुष्ठानप्रकारज्ञानेऽसमर्थः स केवलं विद्याप्रतिपादकं ग्रन्थं नित्यं प्रतिदिनं स्वाध्यायधर्मेणाधीते पठति जपति सोऽपि वक्ष्यमाणं फलं प्राप्नोति । तस्य तज्जपसामर्थ्यात्परमेश्वरः कारुण्यात्तद्विद्यानुष्ठानप्रकारं साकारप्रभृति निराकारपर्यन्तमिहैव कथयति । तथाचान्ते श्रूयते तद्वा एतत्परमं धामैतद्विद्यागर्भितमन्त्रराजाध्यायकस्य पाठकस्य जापकस्येत्यादिना । स उपासकोऽग्निवाय्वादित्यसोमसत्यब्रह्मविष्णुरुद्रवेदैर्नृसिंहरूपैरुपास्यैः पूतो भवति पवित्रो भवति । अन्यैश्च सर्वैर्नृसिंहरूपैरुपास्यैः पूतो भवति । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ इति प्रथमोऽध्यायः ॥ १ ॥

१ क. ग. घ. च. स लोकपूतो भवति स । २ क. घ. ङ. देवपूतो ।

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मृत्युं तरति स पाप्मानं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति[१] स वीरहत्यां तरति स सर्वं तरति स सर्वं तरति ॥ इति द्वितीयोऽध्यायः ॥२॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निं स्तम्भयति स वायुं स्तम्भयति स आदित्यं[२] स्तम्भयति स सोमं[३] स्तम्भयति स उदकं स्तम्भयति स सर्वान्देवान्स्तम्भयति स सर्वान्ग्रहान्स्तम्भयति स विषं स्तम्भयति स विषं स्तम्भयति ॥ इति तृतीयोऽध्यायः ॥ ३ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते

---

इतःप्रभृति नित्यमेतद्विद्यानुष्ठाने तत्प्रतिपादकग्रन्थजपे चाऽऽनुषङ्गिकान्ये(ण्ये)-व फलानि काम्यानि तद्रहितानि वा कथयितुमाह । य उपासको नित्यत्वेन तद्वि-द्यानुष्ठानेन तज्जपेन वा पापक्षयं कामयते । एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीत इत्युक्तार्थम् । तथेतः प्रभृत्याऽन्त्यादध्यायात्तत्र तत्र यच्छब्देन पुंलिङ्गेन प्रागुक्तनृसिंहविद्याया निश्चिततयाऽनुष्ठानात्तद्विद्याप्रतिपादकग्रन्थजप्ता वाऽध्येता वा परामृश्यते । तथा तच्छब्देन पुंलिङ्गेन स एव परामृश्यते । तथा तत्र तत्र पुंलिङ्गात्तच्छब्दाभ्यासात्तस्मिन्नेव नित्यानुष्ठाने जपे वा व्यस्तं समस्तं वा यथायोग्यतया फलं गम्यते स मृत्युं पाप्मानं ब्रह्महत्यां भ्रूणहत्यां भ्रूणो गर्भो यद्वा साङ्गवेदार्थव्याख्याता दीक्षितो भ्रूणो वीरहत्यां वीरः पुत्रः सवनस्थः क्षत्रियो वाऽन्यच्च पातकं सर्वं तरति । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ इति द्वितीयोऽध्यायः ॥ २ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निं वायुमादित्यं सोम-मुदकं सर्वान्देवान्ग्रहान्विषं स्तम्भयतीति स्तम्भनफलनिर्देशः । द्विरभ्यासोऽ-ध्यायसमाप्तिं द्योतयति ॥ इति तृतीयोऽध्यायः ॥ ३ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स भूर्भुवः स्वर्महर्जनस्तपः स-

---

१ छ. ॰ति स सर्वहत्यां तरति स संसारं तरति स । २ क. ॰त्यं स । ३ क. ॰मं स ।

स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं जयति स महर्लोकं जयति स जनो-[1]लोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्वलोकं जयति स सर्वलोकं जयति ॥ इति चतुर्थोऽध्यायः ॥ ४ ॥ य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मनुष्यानाकर्षयति स देवानाकर्षयति स नागानाकर्षयति स यक्षानाकर्षयति स ग्रहानाकर्षयति स सर्वानाकर्षयति स सर्वानाकर्षयति ॥ इति पञ्चमोऽध्यायः ॥ ५ ॥ य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेन यजते स उक्थ्येन यजते स षोडशिना यजते स वाजपेयेन यजते सोऽतिरात्रेण यजते सोऽप्तोर्यामेण यजते सोऽश्वमेधेन यजते स सर्वैः क्रतुभिर्यजते स सर्वैः क्रतुभिर्यजते ॥ इति षष्ठोऽध्यायः ॥ ६ ॥

---

त्यमन्यच्च सर्वं पातालल्लोकं जयतीति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ इति चतुर्थोऽध्यायः ॥ ४ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मनुष्यान्देवान्नागान्यक्षान्ग्रहांस्तद्व्यतिरिक्तानन्यांश्चाऽऽकर्षयतीति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ इति पञ्चमोऽध्यायः ॥ ५ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेनोक्थ्येन षोडशिना वाजपेयेनातिरात्रेणाप्तोर्यामेणान्यैश्च सर्वैः क्रतुभिर्यजत इति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति । न च वाच्यमन्यानर्थक्यादिति न्यायेन कथं फलनिर्देश इति यतो मनोव्यापारैकसाध्यत्वादेतद्विद्यानुष्ठानस्य तस्य च कर्मानुष्ठानादत्यन्तदुःसंपादत्वादित्यधिकारभेदेन नान्यानर्थक्यमिति सर्वं निर्मलम् ॥ इति षष्ठोऽध्यायः ॥ ६ ॥

[1] क. घ. ङ. च. जनलो° । ग. जनलोकं ।

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स ऋचोऽधीते स यजूँष्यधीते स सामान्यधीते सोऽथर्वाणमधीते सोऽङ्गिरसमधीते स शाखा अधीते स पुराणान्यधीते स कल्पानधीते स गाथा अधीते स नाराशंसीरधीते स प्रणवमधीते यः प्रणवमधीते स सर्वमधीते स सर्वमधीते ॥ इति सप्तमोऽध्यायः ॥ ७ ॥ अनुपनीतशतमेकमेकेनोपनीतेन तत्समममुपनीतशतमेकमेकेन गृहस्थेन तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकेन यतिना तत्समं यतीनां च[1] शतं[2] पूर्णं

---

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स ऋचो यजूंषि सामान्यथर्वाणमङ्गिरसमेतच्च त्रयीसंपुटीकरणमेतदन्तरालवर्तित्वादेतस्य तथाच तस्मिन्नेव ब्राह्मणे प्रजापतिः प्रथममथर्वाणमपश्यत्ततस्त्रयीं ततोऽङ्गिरसमित्यसकृदभिहितत्वाच्छाखाः पुराणानि कल्पान्गाथा नाराशंसीः प्रणवमधीत इति फलनिर्देशः । अत्र च यः प्रणवमधीते स सर्वमधीत इति वदन्मूलमन्त्रप्रणवयोः फलसाम्यादुभयोः साम्यं दर्शयति । ततश्च जपे समाधौ चोभयोर्विकल्पः । तथाच नित्यानुष्ठाने फलकामनायां प्रयोगविशेषः । तत्तत्फलप्रदोच्चारणं मूलमन्त्रजपान्ते कार्यमिति केचित् । अन्ये तु तद्विनैव केवलं कामनैव कार्येति सांप्रदायिकमेवान्वेष्यमिति । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति । इति सप्तमोऽध्यायः ॥ ७ ॥

एवं नित्यानुष्ठान आनुषङ्गिकं सर्वं फलमभिधायाथेदानीं तादृग्यानुष्ठातुर्मुमुक्षोः तु रध्येतुश्चोत्कर्षतरतमभावेन सर्वोत्कृष्टतां सर्वोत्कृष्टं च फलमाह—अनुपनीतशतमेकमेकेनोपनीतेन तत्समम् । उपनीतशतमुपकुर्वाणकानां न नैष्ठिकाभिप्रायेण तस्य सर्वोत्कृष्टत्वात् । एकमेकेन गृहस्थेन च तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकेन यतिना तत्समं सोऽयमाश्रमस्वीकारमात्रे तरतमभावोऽनाश्रमप्रयुक्तानुष्ठानाभिप्रायेण ततश्च यतीनां च शतं पूर्णं स्वीकृता-

---

१ क. घ. च. तु । २ क. °तं परमहंसेन तत्समं परमहंसशतमेकमेकेन पू° ।

रुद्र[1]जापकेन तत्समं रुद्रजापिशतमेकमेकेना-
थर्वशिरःशिखाध्या[2]यकेन तत्सममथर्वशिरःशि-
खाध्या[3]यकशतमेकमेकेन[4] मन्त्रराजजापकेन त-
त्समं तद्वा एतत्परमं धाम मन्त्रराजाध्या[5][6]यकस्य[7]
यत्र सूर्यो न तपाति यत्र न वायुर्वाति यत्र न
चन्द्रमास्तपति यत्र न नक्षत्राणि भान्ति यत्र
नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न
दुःखं सदानन्दं परमानन्दं शाश्वतं शान्तं सदा-
शिवं ब्रह्मादिवन्दितं योगिध्येयं[8] यत्र गत्वा न
निवर्तन्ते योगिनस्तदेतदृचाऽभ्युक्तम्—तद्वि-

---

श्रममात्राणां यस्मिन्कस्मिंश्चित्स्थितरुद्रजाप्येन तत्समं रुद्रजप्यशतमेकं यस्मिन्क-
स्मिंश्चिदाश्रमे स्थिताथर्वशिरःशिखाध्यायकेन जापकेन तत्सममथर्वशिरःशिखा-
ध्यायकशतं मन्त्रराजजापकेन तत्सममित्युत्कर्षतरतमभावस्य मन्त्रराजजापक एत-
द्विद्यावति विश्रान्तत्वादेतद्विद्यावान्सर्वोत्कृष्ट इति गम्यते। यथाऽऽनन्दतरतम-
भावस्य ब्रह्मणि विश्रान्तत्वाद्ब्रह्मानन्द एव सर्वोत्कृष्टः। यस्मादेवं तस्माद्वै
प्रसिद्धमेतत्परमं धाम स्थानमेतद्विद्यागर्भितमन्त्रराजाध्यायकस्य जापकस्यानुष्ठा-
तुर्वा यत्र क्षीरोदार्णवस्थाने सूर्यो न तपाति यत्र वायुर्न वाति यत्र न
चन्द्रमास्तपति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रवि-
शति यत्र न दुःखं सदानन्दं परमानन्दं शाश्वतं शान्तं सदाशिवं ब्रह्मादि-
वन्दितं योगिध्येयं यत्र गत्वा न निवर्तन्ते योगिनस्तदेतत्स्थानमृचाऽभ्युक्तं
विष्णोर्यत्परमं पदमिति। यच्छब्देन क्षीरोदार्णवस्थानं परामृश्यते पर-
मपदमत्यभिज्ञानात्सूरय उपासका उपासनाभेदेन तादात्म्यमुपासनया चे-
त्सायुज्यं फलं ततश्च विष्णुरेव परमं पदम्। उभयत्रापि विष्णोरिति षष्ठी-
निर्देशः शिलापुत्रकस्य शरीरमितिवद्द्रष्टव्यः। अथोपास्योपासकभावेन चेद्-

---

१ क. °द्रजाप्येन। २ घ. °ध्यायिके°। ३ घ. °ध्यायिक°। ४ क. ङ. °न तापनीयोपनिषदध्यापकेन तत्समं तापनीयोपनिषदध्यापकशतमेकमेकेन म°। ५ ङ. °राजाध्याप°। ६ घ. °ध्यायिक°। ७ क. °स्य भवति य°। ८ क. ङ. °यं परमं पदं य°।

षणोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमिति तदेतन्निष्कामस्य भवति[1], तदेतन्निष्कामस्य भवति ॥ इत्यष्टमोऽध्यायः ॥ ८ ॥ ॥ ३ ॥

इत्यथर्ववेदान्तर्गतनृसिंहपूर्वतापनीयोपनिषदि पञ्चम्युपनिषत्समाप्ता ॥ ५ ॥

---

नुष्टुब्विद्या तस्य नृसिंहस्य विष्णोः परमं पदं परमं स्थानं महाचक्रनाभिक्षीरोदार्णवप्रभृति तत्र स्थिता उपासका अनुष्ठातारो जप्तारोऽध्येतारो वा सदा सर्वकालं पश्यन्ति । कीदृशं तदित्यपेक्षित आह—दिवीव द्युलोक इव चक्षुः ख्यातेः सूर्यमण्डलमाततमासमन्तात्ततं विस्तृतं वर्तुलं प्रकाशात्मकं सर्वप्रकाशाभिभवकारणमतः सूर्यचन्द्रनक्षत्रादीनां ब्रह्मणि प्रवेशः प्रतिषिद्धस्तपकर्तृता च यत्र सूर्यो न तपतीत्यादिना । एवं तस्मिन्नाधिदैवात्मके दुःखे प्रतिषिद्ध आध्यात्मिकदुःखप्राप्तौ तत्प्रतिषेधति यत्र न दुःखमिति । विदुःखता दुःखभावमात्रे प्राप्ते सुषुप्तवज्जडता स्यादिति तद्व्यावृत्त्यर्थं सदानन्दमिति । ब्रह्मादिवन्दितामिति । तदादिन्यायेन नाभिस्थब्रह्मविष्णुमहेश्वरैः परिचारकैर्वन्दनीयं महाचक्राख्यं स्थानम् । यत्र गत्वेति गन्तव्यतामाह—तद्विप्रास इति । तत्तादृशं स्थानं विप्रासो विप्रा ब्राह्मणा उपासका विपन्यवो मेधाविनः समाधौ धारणशक्तियुक्ताः । जागृवांसो जागरितावस्थायामेवावस्थात्रयात्प्रच्युत्य समिन्धते समृद्धिं कुर्वन्ति । तादात्म्यपक्षे तु मन्त्रब्राह्मणयोर्यथास्वरूपं व्याख्येयम् । इतिशब्दो मन्त्रसमाप्तिं द्योतयति । पदचतुष्टयाभ्यासः सर्वोपनिषत्समाप्तिं द्योतयतीति सर्वं निर्मलं सिद्धम् ॥ इत्यष्टमोऽध्यायः ॥ ८ ॥ ॥ ३ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत आद्यकृतावाथर्वणनृसिंहपूर्वतापनीयोपनिषद्भाष्ये पञ्चमोपनिषद्भाष्यं संपूर्णम् ॥ ५ ॥

समाप्तेयं सभाष्यनृसिंहपूर्वतापनीयोपनिषत् ॥

---

१ क. ग. घ. °ति । य एवं वेदेति महोपनिषत् । ङ° । छ. °ति । य एवं वेदेति महोपनिषद्य एतां महोपानिषदमेव सकृत्पुरश्चरणो महाविष्णुर्भवति महाविष्णुर्भवतीति ।

ॐ तत्सद्ब्रह्मणे नमः ।

# नृसिंहोत्तरतापनीयोपनिषत् ।

श्रीमद्विद्यारण्यमुनिविरचितदीपिकासमेता ।

ॐ नमो भगवते श्रीदिव्यलक्ष्मीनृसिंहाय नमः ।।
निरस्तनिखिलानर्थपरमानन्दरूपिणे ।।
नृसिंहाय नमस्कुर्मः सर्वधीवृत्तिसाक्षिणे ।। १ ।।
चरणाब्जरजोलेशसंपर्कात्सहसाऽसकृत् ।।
सर्वसंसारहीनोऽहं तान्नतोऽस्मि गुरून्सदा ।। २ ।।
तापनीयरहस्यार्थविवृतिर्लेशतो मया ।।
क्रियतेऽल्पधिया तस्मात्क्षन्तव्यं क्षतमुत्तमैः ।। ३ ।।

इह पूर्वस्मिन्ग्रन्थे नृसिंहाकारब्रह्मविषया विद्या निरुपाधिकब्रह्मविद्याफलाऽधिगता । तथा ह्युक्तं वार्तिककृद्भिः—“नृसिंहब्रह्मविद्यैषा व्याख्याता ज्ञानसिद्धये” इति । प्रणवस्य त्वनुष्टुबङ्गत्वेनैव तत्र प्रवेशः । तथाचोक्तम्—सर्वे वेदाः प्रणवादिकास्तं प्रणवं तत्साम्नोऽङ्गं वेद स त्रीँल्लोकाञ्जयतीति । इह तु पूर्वोक्तोपासनादिभिरीषच्छुद्धान्तःकरणस्य परब्रह्मविद्याप्रवेशमात्रयोग्यस्य नृसिंहाकारमेव ब्रह्म प्रणवप्रधानमादाय तद्द्वारेण तुरीयपर्यवसायिनीमुपासनां कर्तव्यत्वेन विधाय तदनुष्ठानेनातिशुद्धान्तःकरणस्य साक्षात्तुरीयविद्यैव स्वरूपावस्थानफलोच्यते । तदुक्तम्—“तुरीयावसिता विद्या साक्षादत्र प्रदर्श्यते” इति । तुरीयावसितोपासना साक्षात्तुरीयविद्या चात्र प्रदर्श्यत इत्यर्थः । अत्रानुष्टुप्प्रवेशस्तु प्रणवाङ्गत्वेनैवानुष्टुभाऽन्विष्य प्रणवेनैव तस्मिन्नेव स्थिताः । ओंकारे परे ब्रह्मणि पर्यवसितो भवेदित्यनुष्टुबङ्गत्वस्य प्रणवप्रधानत्वस्य च श्रवणादनुष्टुबर्थस्य प्रणव एव प्रक्षेपदर्शनाच्चोत्तरत्र । आख्यायिका तु विद्यासंप्रदानग्रहणविधिप्रदर्शनार्था विद्यास्तुत्यर्था वा । देवाः पूर्वोक्तैः साध-

ॐ भद्रं कर्णेभिः० ॥१॥ स्वस्ति न इन्द्रो०॥२॥
ॐ शान्तिः शान्तिः शान्तिः ॥

देवा ह वै प्रजापतिमब्रुवन्नणोरणीयांसमिममात्मानमोंकारं नो व्याचक्ष्वेति[1] तथेत्योमित्येतदक्षरमिदं[2] सर्वं

नैर्दीप्तान्तःकरणाः प्रसिद्धा वा देवाः । हेत्यैतिह्यार्थः । वैशब्देनोक्तसाधनविशेषैर्दीप्तान्तःकरणत्वेन देवानां प्रष्टृत्वसामर्थ्यं स्मारयति । प्रजापतिमाचार्यं प्रसिद्धं वा अब्रुवन्नुपगम्योक्तवन्तः । किमुक्तवन्त इत्याह—अणोरणीयांसमिममात्मानमोंकारं नो व्याचक्ष्वेति । अणोः सूक्ष्मादप्याकाशादेरणीयांसं सूक्ष्मतरं परमात्मानम् । इममनन्तरातीतग्रन्थे गुरुणाऽनुष्टुबुपाधिकत्वेनोक्तम् । किमोंकारं नो व्याचक्ष्व । अनुष्टुभोऽपि कारणभूतो 'य ओंकारस्तद्रूपं परमात्मानं नोऽस्मभ्यं व्याचक्ष्व विस्पष्टं प्रकथय । स्वप्रणवकार्यभूता ह्यनुष्टुप्श्रूयते वैरिञ्चे मन्त्रराजकल्पे—

"चतुर्मात्रात्मकात्ताराच्चतुष्पादो महामनुः ।
वक्त्रेभ्यो मम संजातो मन्त्रविद्येश्वरेश्वरः" इति॥

दृश्यते च घटे मृदन्वयवदनुष्टुभि प्रणवस्यान्वयः । उकारादिम(ह)कारान्ता ह्यनुष्टुप्प्रणवैकदेश एव पर्यवसिता दृश्यते । उक्तं वैरिञ्चे मन्त्रराजकल्पे—

"प्रणवान्तर्गतोऽयं हि मन्त्रः सर्वार्थसाधकः ।
उकार आदिर्मन्त्रस्य हकारोऽन्त्यः प्रकीर्तितः ॥
लुप्ते हकारे प्रणवो व्यज्यते व्यत्ययाक्षरे" इति ।

अतः कारणत्वादोंकारस्यानुष्टुभोऽप्यणीयस्त्वं सिद्धम् । एतदुक्तं भवति । अनुष्टुप्प्राधान्येनोक्तमात्मानं तत्कारणप्रणवप्राधान्येन प्रणवगुणभूततयाऽनुष्टुभं च स्वीकृत्य व्याचक्ष्वेति । इतिशब्दः प्रश्नवाक्यसमाप्त्यर्थः । देवैरेवं प्रार्थितः प्रजापतिरोमित्यनुजानाति प्रार्थितम् । तथेति । यथाप्रार्थितमुपदिशामीत्यर्थः । तत्र प्रथमं संग्रहेणोक्तामनुष्टुबात्मनः प्रणवरूपतामाह—ओमित्येतदक्षरमिदं सर्वमिति । संक्षेपविस्तराभ्यां हि प्रतिपाद्यमानं वस्तु मन्दप्रज्ञस्यापि बुद्धावारोहति । यदिदमनुष्टुम्मात्रमित्युक्तं सर्वं कार्यकारणात्मकं जगत्स एतं मन्त्रराजं नारसिंहमानुष्टुभमपश्यत्तेन वै सर्वमिदमसृजद्यदिदं किंच तस्मात्सर्वमे॰ ऽऽनुष्टुभमित्याचक्षत इत्यादिवाक्यैस्तदनुष्टुभा सहोमित्येतदक्ष-

१ ग. घ. 'ति । ओं त॰ । २ छ. 'थेत्यों तथेत्यो॰ ।

रम् । कुतः । यतो वाङ्मात्ररूपोऽयमोंकारः । वक्ष्यति हि वाग्वा ओंकार इति । नन्वनुष्टुभोऽपि वाङ्मात्ररूपत्वमुक्तं पूर्वत्र वाग्वा अनुष्टुबिति । अतः सार्थाया अनुष्टुभः कथं प्रणवात्मकत्वं विपरीतं किं न स्यादिति चेन्न । अनुष्टुभि प्रणवान्वयदर्शनेन प्रणवस्यानुष्टुभं प्रति कारणत्वोपपादनेन परिहृतत्वादस्य चोद्यस्य । वाङ्मात्ररूपिण्यास्त्वनुष्टुभस्तथाविधात्प्रणवाद्भेद एव नास्तीति तस्या अपि तदात्मकत्वं सिद्धम् । यदि च भेदोऽस्तीत्युच्येत तथाऽपि वाग्विशेषरूपयोर्हि प्रणवानुष्टुभोः प्रणवस्यैव कारणत्वं दृष्टम् । तस्माद्वाक्सामान्यरूपयोरपि तयोस्तथैव कार्यकारणभावो युक्तः । इति वाङ्मात्ररूपे प्रणवेऽनुष्टुबन्तर्भूतैव यथाऽन्ये सर्वे शब्दविशेषाः । उक्तं च यथा—"उकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति । साक्षाच्च—तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णेति सर्ववागात्मकत्वमुक्तं प्रणवस्य । सर्वं वाग्वस्तु प्रणवात्मकमिति च । अर्थविशेषाणां च तद्वाचकनामविशेषद्वारेण वा वाङ्मात्ररूपे प्रणवेऽन्तर्भावः संभवति तेषां तद्व्यतिरेकेणानुपलम्भात् । उक्तं च—"तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामानि तस्यैव यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरम्" इति । अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा । यो वै तां वाचं वेद यस्या एष विकार इति वाचः कारणत्वश्रवणाच्च । वाचारम्भणं विकारो नामधेयमिति च विकारस्य नामधेयमात्रत्वं श्रुतम् । साक्षाच्च प्रणवस्यैव सर्वात्मकत्वं श्रुतम्—ओंकार एवेदं सर्वमेतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारो यश्छन्दसामृषभो विश्वरूपः । ओमितीदं सर्वमित्यादिवाक्यैः । ननु वाङ्मात्रात्मतां विवक्षित्वा सर्वशब्दानां सर्वात्मत्वं शक्यं वक्तुं तथाच सति को विशेषः प्रणवस्य सर्वात्मकत्वे येन सर्वश्रुतीनां मात्रादरो महान्दृश्यते । सर्वे वेदा यत्पदमामनन्ति । एतदालम्बनं श्रेष्ठं धनुर्गृहीत्वा प्रणवो धनुस्तिस्रो मात्राः । एतद्वै महोपनिषदमित्यादिप्रदेशेषु । अनुष्टुबन्तर्भाव एवासौ विशेष इति चेन्न । अन्येष्वप्युकारादिमकारान्तेषु मन्त्रेष्वनुष्टुबन्तर्भावसंभवादतोऽत्रैवानुष्टुबन्तर्भावकथनमपि प्रणवस्य न मन्त्रान्तरेभ्यो विशेषं द्योतयति । अतः कोऽसौ विशेष इति वक्तव्यम् । उच्यते । श्रुतिगम्य एवासौ विशेषः स्मृतिगम्यो वा नास्मद्बुद्धिगम्यः । तथाचोक्तं सारसंग्रहे प्रणवनिर्णये—

"ऋग्वेदः स्यादकारान्त उकारान्तं यजुर्मतम् ।
सामवेदो मकारान्तः सर्वग्राही ततो ध्रुवः ॥

---

१ ट. °ङ्मात्रतां ।

षडङ्गन्यायमीमांसा पुराणं स्मृतिपूर्वकम् ।
वेदेऽन्तर्भूतमेव स्यात्सर्वे वेदाश्च तारगाः ।
अहयोर्मध्यगा वर्णा लक्षौ कषलगौ यतः ॥
अकारः पुरुषस्तत्र हकारः प्रकृतिः स्मृता ।
तथा प्रणवगोऽकारो बीजात्मा पुरुषः स्मृतः ॥
उकारः शक्तिरूपत्वात्प्रकृतिः सा हरूपिणी ।
पुंप्रकृत्यात्मका वर्णास्तस्मादोंमध्यगाः सदा ॥
क्षराक्षरपरो देवो मकारः परमेश्वरः ।
अथवाऽकार एवायं चिन्मात्रः परमेश्वरः ॥
सर्वप्रकाशको देवो ह्यकारः सर्वभासकः ।
न हि तेन विना वर्णप्रकाशः क्वापि कस्यचित् ॥
कार्यं च कारणं सर्वमुकारः शक्तिरूपवान् ।
उकारमत एवात्र जगत्प्रसवरूपतः ॥
उच्चरत्यतिदीर्घेण सृष्टिस्थितिलयात्मना ।
कार्यकारणरूपेण महेशादात्मनो हतम् ॥
तमेवमात्मकं भूयः प्रविश्याऽऽत्मस्वरूपिणम् ।
तावन्मात्रत्वमायाति मकारो हि महाचितिः ॥
अकारः सोमरूपोऽथ उकारः सूर्य एव तु ।
मकारश्च महावह्निरिति तेजस्त्रयात्मकः ॥
षोडशात्मा भवेत्सोमः षोडशः स्वररूपवान् ।
सूर्यो द्वादशमासात्मा मासाश्च द्विविधा मताः ॥
अयनद्वयभेदेन सृष्टिसंहाररूपतः ।
संसारमोक्षभेदेन तथाऽहोरात्रभेदतः ॥
कंभादिवर्णरूपास्ते सृष्टिसंहाररूपतः ।
मकारोकारकलितः परमात्मा महेश्वरः ॥
आदित्यान्तर्गतो देवः कालकालो महाप्रभुः ।
सर्वसंहारवह्न्यात्मा साक्षाच्चिन्मात्रविग्रहः ॥
पुरुषः पञ्चविंशोऽयं षड्विंशस्तु महेश्वरः ।
पञ्चविंशात्मना भोक्ता षड्विंशो भोजको मतः ॥

१ अ. कभादि ।

## तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव

उभयात्मा मकारोऽयं प्रणवस्थ उदाहृतः ।
भोक्ता तत्राग्निरूपः स्याद्दशभेदयुतः स च ॥
सप्तधातुद्वयाधारभेदतोऽस्मिन्कलेवरे ।
यकारादिक्षकारान्ता वर्णास्तद्भेदरूपिणः ॥
मकारस्तु समष्ट्यात्मा भोक्तृभोजकरूपवान् ।
अतः सर्वात्मकस्तारः साक्षात्सर्वेश्वरः स्वयम् ॥
सर्वतेजोनुगश्चैव सर्ववर्णात्मकस्तथा ।
अपरः प्रकृतेर्यद्वा वाचकोऽकार इष्यते ॥
सन्मात्रबीजरूपेण सर्वत्रानुगता हि सा ।
अकारः सर्ववर्णेषु तथैवेहान्वितः सदा ॥
तस्मात्तद्वाचकोऽकारस्तदभिन्नः सदा भवेत् ।
उन्मुखः स्यादुकारोऽयं तस्य उद्गतसाक्षिणः ॥
व्याप्तेर्बलस्य चाऽऽधिक्यादकारादुद्गतो ह्यसौ ।
तद्गतसाक्ष्यात्मिका शक्तिः साभासबलसंयुतः ॥
उकारोऽतस्तदात्मा स्यात्तदाभासामृताप्लुतः ।
मकारो महतो बोधः केवलस्य महात्मनः ॥
निराभासमहासंविदानन्दैकस्वरूपिणः ।
इति शब्दान्तरेभ्योऽयमोंकारः परमो मतः ॥
वर्णा वर्णान्तरेभ्यश्च सारभूताः परा मताः ।
आदिमान्तास्तु ये मन्त्रास्ते सर्वे प्रणवात्मकाः ॥
तेषां तदात्मकत्वेन सर्वात्मत्वं स्वतो न तु'' इति ।

एवं सार्थं मन्त्रराजं प्रणवेऽन्तर्भाव्य तेनाऽऽत्मप्रतिपत्तिप्रकारं च संग्रहेणाभिधाय तदेव विस्तरेण व्याचिख्यासुर्वक्ष्यमाणेऽर्थे श्रोतॄणां बुद्धिसमाधानविशेषसिद्धये प्रजापतिराह—तस्योपव्याख्यानमिति । तस्योमित्येतस्याक्षरस्योपव्याख्यानमात्मप्रतिपत्त्युपायतया तत्सामीप्येन व्याख्यानम् । इदानीं प्रस्तुतमिति शेषः । यथाप्रतिज्ञातमुपव्याख्यानमेवानुवर्तयते—भूतमित्यादिना । भूतं भवद्भविष्यदित्येवं कालत्रयपरिच्छिन्नं कार्यजातमित्यर्थः । तच्च द्विविधं स्थूलं सूक्ष्मं चेति । तत्र स्थूलं समष्टिव्यष्ट्यात्मकं विराड्रूपम् । सूक्ष्मं समष्टिव्यष्ट्यात्मकं हिरण्यगर्भरूपम् । तयोरुभयोरपि प्रणवात्मकतामाह—सर्वमोंकार एवेति । ननु भूतं भवद्भविष्यदिति सर्वमकारोकारावेवेति वक्तव्यं विराड्हिरण्यगर्भ-

योर्ह्युत्तरत्राकारोकारात्मत्वमेवोच्यते न तु समस्तप्रणवात्मकत्वम् । अत्रापि भूतं भवद्भविष्यदिति तावेवोक्तौ तयोरेव दिक्कालपरिच्छेदसंभव इति यच्चान्यत्त्रिकालातीतमित्यव्याकृतादेः पृथक्कथनाच्च । यद्येवं तर्ह्योंकारैकदेशात्मानावपि विराड्ढिरण्यगर्भावुपचारेणोंकारात्मानावित्युक्ताविति चेत् । न । श्रुत्यर्थपरित्यागप्रसङ्गात् । तर्हि सामान्येनोंकारमात्रं सर्वमित्युच्यत इति चेत् । यद्येवं तर्हि कालत्रयपरिच्छिन्नं तदपरिच्छिन्नं च सर्वमनूद्य पुनः सर्वमेतदोंकार एवेति वक्तव्यं न तु जगदेकदेशमेवानूद्यायमोंकार एवायमप्योंकार एवेति वचनमुपपन्नम् । सामान्येन च सर्वात्मकमोमित्येतदक्षरमिदं सर्वमिति पूर्वोक्तमिति न पुनर्वचनीयम् । अतो विराड्ढिरण्यगर्भाव्याकृतसन्मात्रशरीराणां प्रत्येकं सर्वात्मकप्रणवात्मत्वमेवात्रोच्यते । नन्वेकस्यैवोंकारस्यैकस्मिन्नेव प्रयोगे कथं सर्वात्मना शरीरचतुष्टयात्मत्वं संभवति । न । एकस्यैव प्रणवस्य वैखर्यादिरूपेण प्रत्येकं सर्वात्मत्वादिति ब्रूमः । वैखर्यास्तावदक्षररूपिण्या अकारोकारमकारार्धमात्रप्रणवात्मकत्वं प्रत्यक्षसिद्धम् । मध्यमापश्यन्तीपरारूपप्रणवस्यापि वैखर्याः प्रविभागरूपत्वेन सर्वात्मत्वमभ्युपगन्तव्यम् । एवं सति प्रत्येकं चतूरूपेण वक्ष्यमाणानां विराडादीनां वाचकत्वं संभवत्योंकारस्य । अकारादीनामपि चतूरूपाणामेव विराडादिवाचकत्वं वक्ष्यति । विश्वो वैश्वानरश्चतूरूप अकार एवेत्यादिना । अकारादयो हि बीजबिन्दुनादशक्तिरूपस्वात्मभेदैर्वाक्चतुष्टयरूपा एव न हि वैखर्यादिरूपचतुष्टयरहितः शब्द एवास्ति लोके । उक्तं च वाचश्चतुरात्मत्वमुत्तरोत्तरं सौक्ष्म्यं च—" चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति " इति । तस्माद्वैखर्यादिरूपस्य प्रणवस्यैवोत्तरोत्तरसूक्ष्मस्य तथारूपविराजादिवाचकत्वेन विराडाद्यात्मकत्वमत्रोक्तम् । यावद्ब्रह्म विष्ठितं तावती वागिति च वाक्यान्तरम् । तत्राकारोकारमकारार्धमात्रात्माऽस्मदादिश्रोत्रग्राह्यः क्रियाशक्तिप्रधानो वैखर्यात्मा तत्प्रधानः प्रणवो विराजो वाचकः । उभयोः खरत्वस्य कठिनत्वस्य साम्यात् । विशेषेण खरत्वाद्धि वैखर्युच्यते । वैखर्युच्चारणात्पूर्वमकारादिमात्राचतुष्टयरूपेणैव मनस्युद्भूतः क्रमादिविशिष्टवर्णविमर्शात्मा ज्ञानशक्तिप्रधानो मध्यमा वागात्मा तत्प्रधानः प्रणवो हिरण्यगर्भवाचको मनोरूपत्वसाम्यादुभयोः सा च मध्ये वर्तते चेति हि मध्यमेत्युच्यते । एवं विराड्ढिरण्यगर्भयोर्वक्ष्यमाणप्रकारेण चतुरात्मनो वैखरीमध्यमारूपचतुर्मात्रप्रणवात्मत्वमभिधाय समष्टिव्यष्टिसुषुप्तात्मकस्याव्याकृतस्य समस्तजगद्बाम-

१ अ. 'मात्राक्'।

**यच्चान्यत्त्रिकालातीतं तदप्योंकार एव सर्वं ह्येत-**
**द्ब्रह्मायमात्मा ब्रह्म तमेतमात्मानमोमिति**
**ब्रह्मणैकीकृत्य ब्रह्म चाऽऽत्मनोमित्येकीकृत्य**

नाविशिष्टतया किंचिद्बहिर्मुखसदात्मकस्य कारणशरीरस्यान्तर्मुखसदात्मकस्य सामान्यशरीरस्य च ब्रह्मज्ञानात्मनः क्रमेण पश्यन्तीपरावाग्रूपप्रणवरूपता-माह—यच्चान्यत्त्रिकालातीतं तदप्योंकार एवेति। मध्यमावाग्रूपविशेषज्ञानात्पू-र्वक्रमबहिर्मुखस्पन्दमात्ररूपसामान्यज्ञानात्मक इच्छाशक्तिप्रधानः पश्यन्त्यात्मा प्रणव उक्तकारणशरीरवाचकः पश्यद्रूपत्वाविशेषात्। परित्यक्तसर्वस्पन्दः केव-लसन्मात्रतया स्थितः स्वातन्त्र्यशक्तिः सदात्मा परावाग्रूपप्रणव उक्तरूपसा-मान्यशरीरवाचकः परत्वसामान्यात्। उक्तवाच्यानां चोक्तवाचकव्यतिरेके-णानुपलब्धेः सर्वमोंकार एवेति युक्तम्। ओंकारस्य सर्ववाच्यवाचककल्पनार-हितचिन्मात्ररूपत्वं च यच्चान्यदित्यनेनैवोक्तम्। न हि चिद्रूपत्वं विना प्रण-वस्य बोधकत्वं संभवति। एवमात्मप्रतिपत्त्यर्थमोंकारस्योपव्याख्यानमेकेन प्रकारेण कृत्वा व्याख्यातं वाक्चतुष्टयं प्रणवरूपं सार्थं क्रमेण तत्साक्षिणि ब्रह्मणि प्रणवे विलापितं तावन्मात्रं भवतीत्याह—सर्वं ह्येतदिति। हिशब्देन तत्राध्यस्तत्वलक्षणो हेतुः सूचितः। एवं त्वंपदार्थं तत्पदार्थपर्यन्तमुपव्याख्या-नेन संशोध्य शुद्धस्य प्रत्यगात्मनो ब्रह्मणैक्यमाह—अयमात्मा ब्रह्मेति। उक्तं ब्रह्मात्मैक्यं प्रणवेन व्यतिहारेण प्रतिपत्तव्यमित्याह—तमेतमात्मानमो-मिति ब्रह्मणैकीकृत्य ब्रह्म चाऽऽत्मनोमित्येकीकृत्येति। तमेतं ब्रह्मस्वरूपं प्रत्यगात्मानमिति तदेतच्छब्दयोरर्थः। तत्र प्रथमा प्रतिपत्तिरहं स इति-वाक्यरूपेण प्रणवेन कार्या। तत्राहंशब्दः स्थूलसूक्ष्मप्रधानत्वंपदार्थवाचकः सन्नवस्थात्रयसाक्षिणं प्रत्यगात्मानं लक्षयति। अकारोकारावपि तद्वाचकत्वेन तमेव लक्षयत इति तदात्मकौ तौ। स इति कारणोपाधिप्रधानतत्पदार्थवाचकः संस्तत्साक्षिणं परमात्मानं लक्षयति। मकारोऽपि तद्वाचकत्वेन तमेव लक्षयति। सामानाधिकरण्येन च प्रत्यगात्मनो ब्रह्मणैक्यं प्रतिपत्तव्यम्। द्वितीया तु प्रति-पत्तिः सोऽहंवाक्यरूपेण प्रणवेन कर्तव्या। सोऽहमित्यस्माद्वाक्यात्सकारहका-रयोरुद्धारे कृते पूर्वरूपे चोमिति प्रणवः संपद्यते। तस्मादोमिति परमात्मवा-चकः स इति हि तस्यार्थः। तच्छब्दश्च कारणोपाधिप्रधानब्रह्मवाचक इति। अहमिति प्रत्यगात्मवाचकः सोहंशब्दात्मको ह्यसौ सामानाधिकरण्येन ब्रह्मणः

१ क. ह्म स्वयमात्मा न°।

**तदेकमजरममरममृतमभयमोमित्यनुभूय तस्मिन्निदं सर्वं त्रिशरीरमारोप्य तन्मयं हि तदेवेति संहरेदोमिति तं वा एतं त्रिशरीरमात्मानं त्रिशरीरं परं ब्रह्मानुसंदध्या-**

---

प्रत्यगात्मनैक्यं प्रतिपत्तव्यमिति । एवं व्यतिहारेणैकत्वं प्रतिपाद्यानुज्ञाप्रणवेन परिपूर्णत्वावद्योतकेन परिपूर्णे वाक्यार्थमात्रे पदपदार्थद्वयतदैक्यं प्रति विकल्परहिते स्थितिः कार्या मन्दस्य सम्यग्ज्ञानोदयायेत्याह—तदेकमजरममृतमभयमोमित्यनुभूयेति । तदेकं वस्त्वेकत्वेन जराहेत्वभावादजरमजरत्वादमृतं सर्वविकारवर्जितमित्यर्थः । अतोऽभयमिति । ओमिति शास्त्राचार्ययुक्तिसिद्धैक्यस्य स्वानुभवसिद्धतया सत्यमेवंरूपमेवाऽऽत्मतत्त्वमिति स्वस्य पूर्णत्वावद्योतकेनानुज्ञाप्रणवेनानुभूयेत्यर्थः । अनुभूय तस्मिन्निदं सर्वं त्रिशरीरमारोप्य संहरेदित्यन्वयः । यद्येवं स्वात्मन्यवस्थितस्य कदाचित्केनचिन्निमित्तेन जगत्प्रतिभासः स्यात्तदा तत्सर्वं स्वशरीरत्वेन स्वात्मनि कल्पनीयमित्याह—तस्मिन्निदं सर्वं त्रिशरीरमारोप्येति । तस्मिन्पूर्वोक्ते वाक्यार्थरूपे स्वात्मनि तुरीय इदं सर्वं कार्यकारणात्मकं जगत्त्रिशरीरं स्थूलसूक्ष्मकारणलक्षणं शरीरत्रयं यथा भवति तथाऽऽरोप्येत्यर्थः । अत्र कारणसामान्यशरीरयोरेकत्वं विवक्षित्वा त्रिशरीरत्वमुक्तमित्यवगन्तव्यम् । ईक्षणावस्थं प्रलयावस्थं बहिर्मुखं सदात्मकं कारणं कारणशरीरमुच्यते । तदेव सन्मात्रमन्तर्मुखं साक्ष्येकाकारं ब्रह्मज्ञानरूपं सामान्यशरीरमित्युच्यते । आरोप्य किं तथैव स्थातव्यं नेत्याह—तन्मयं हि तदेवेति संहरेदोमिति । यत्तत्सच्चिदानन्दरूपं तुरीयं ब्रह्म तन्मयं हीदं सर्वं पटः सन्पटः संविन्पटः सुखमित्यादिप्रकारेण तदनुगमदर्शनात् । हि यस्मादेवं तस्मिन्नध्यस्तं सर्वं तस्मात्तदेवेति युक्तितो निर्धार्योमित्यात्मानं प्रतिपद्य सर्वं स्वात्ममात्रतया संहरेदित्यर्थः । ओमितितुरीयप्रतिपत्त्या तत्राध्यस्तं सर्वं तावन्मात्रतया विलापयेन्मन्द इति भावः । नन्वस्य सर्वस्य कथं त्रिशरीरत्वं कथं वा तुरीय आरोपितत्वेन तावन्मात्रत्वं कथं वाऽस्योंकारोच्चारणमात्रेण तुरीयप्रतिपत्त्या लय इत्याकाङ्क्षायां तत्प्रतिपादनाय तं वा एतमित्यारभ्यैष वीरो नृसिंह एवेत्यन्तो ग्रन्थ आरभ्यते । तत्र तावदस्य सर्वस्य त्रिशरीरत्वमाह—तं वा एतं त्रिशरीरमात्मानं त्रिशरीरं परं ब्रह्मानुसंदध्यादिति । तमिति परमात्मानं परामृश्य वैशब्देन तं स्मारयित्वा स एवायं प्रत्यगात्मेत्याह—एतमिति । एवमात्मनः पारमार्थिकं रूपमभिधाय तस्यैव काल्पनिकनिय-

* अजरममृतमिति टीकानुसारी पाठः ।

**स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वात्सूक्ष्मभुक्त्वाच्चैक्यादानन्दभोगाच्च सोऽयमात्मा चतुष्पाज्जागरितस्थानः स्थूलप्रज्ञः सप्ताङ्ग**

म्यरूपं शरीरत्रयात्मकं नियन्तुः शरीरत्रयेणाभिन्नं प्रतिपत्तव्यमित्याह—त्रिशरीरमित्यादिना। स्थूलसूक्ष्मसौषुप्तशरीरैरात्मनस्त्रिशरीरत्वं तदभिमानित्वेनायमात्मा विश्वतैजसप्राज्ञनामा भवति। तमेवं त्रिशरीरमात्मानं त्रिशरीरं परं ब्रह्मानुसंदध्यादनुचिन्तयेत्। विराड्ढिरण्यगर्भाव्याकृतशरीरैर्ब्रह्मणस्त्रिशरीरत्वम्। तदुपहितं च ब्रह्म वैश्वानरसूत्रेश्वरशब्दैरभिलप्यते। यद्यपि नियम्यं सर्वं जीवस्य ब्रह्मणश्च शरीरं तथापि समष्टिशरीरत्रये ब्रह्माभिव्यक्त्यतिशयात्त्रयं नियन्तुर्ब्रह्मण इत्युच्यते। नियन्तुर्हि नियम्यमात्रं शरीरं श्रुतं यस्य सर्वाणि भूतानि शरीरमित्यादिना। जीवस्य च सर्वशरीरत्वं वक्ष्यति सर्वे जीवाः सर्वमया इति। तस्मादीशस्य यथा यस्मिञ्शरीरे स्वातन्त्र्यं तद्वत्तदभिन्नस्याऽऽत्मनोऽपि तत्र स्वातन्त्र्यं परिज्ञातुमेव जीवेश्वरशरीरैक्यमवगन्तव्यम्। स हि प्रतिबोधं वाक्चतुष्टयार्थरूपं शरीरत्रयं सृजति स्थापयति संहरति च। तत्कथमस्य[2] तत्पारतन्त्र्यम्। कथं त्रिशरीरस्यास्य परिच्छिन्नस्यापरिच्छिन्नत्रिशरीरब्रह्मणैक्यं प्रतिपत्तुं शक्यते। गुणैरित्याह—स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वात्सूक्ष्मभुक्त्वाच्चैक्यादानन्दभोगाच्चेति। तत्र स्थूलत्वादिति स्थूलविराजोरुपाध्यंशयोरेकत्वे सामान्यम्। स्थूलभुक्त्वादिति विश्ववैश्वानरयोरुपहितयोः। एवमुत्तरयोरपि पदद्वयं योज्यम्। तुरीयस्य तु साक्षिणः साक्षित्वाद[3]वैकत्वं द्रष्टव्यम्। वक्ष्यति च साक्षित्वाच्चेति। एवं व्यष्टिसमष्ट्यैक्यप्रतिपादनेन सर्वस्यापि जगतस्त्रिशरीरत्वं प्रतिपाद्य प्रणवोच्चारणमात्रेण सर्वप्रपञ्चलयपूर्वकं तद्विलक्षणे ब्रह्मण्यवस्थानं दर्शयितुं चतुर्मात्रात्मकेन प्रणवेन यथोक्तस्य परापरस्याऽऽत्मन एकत्वं प्रकारान्तरेणापि प्रदर्शयितुं तस्य चतुष्पात्त्वं चतुरंशत्वं चाऽऽह—सोऽयमात्मा चतुष्पादिति। सोऽयमिति परापररूप इत्यर्थः। कथं चतुष्पात्त्वमित्याह—जागरितस्थान इत्यादिना। स्थूलविषया प्रज्ञाऽस्येति स्थूलप्रज्ञः। द्यौर्मूर्धा चक्षुरादित्योऽग्निर्मुखं प्राणो वायुर्देहमध्यमाकाशो बस्तिः समुद्रः पृथिवी पादाविति सप्ताङ्गान्यस्य नामरूपात्मना तद्व्यापकस्येति सप्ताङ्गः। वाक्श्रोत्रप्राणमनआदीनि साधिदैवतानि नामरूपाश्रयक्रियासाराण्येकोनविंशतिसंख्यानि मुखानि चोपलब्धिद्वाराण्यस्ये-

१ ग. °येण भि°। २ ट. °स्य पार°। ३ ग. °देक°।

एकोनविंशतिमुखः स्थूलभुक्चतुरात्मा विश्वो वैश्वानरः प्रथमः पादः स्वप्नस्थानः सूक्ष्मप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः सूक्ष्मभुक्चतुरात्मा तैजसो हिरण्यगर्भो द्वितीयः पादो यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभु-

---

त्येकोनविंशतिमुखः । स्थूलान्विषयान्प्राधान्येन भुङ्क्ते स्वात्मसात्करोतीति स्थूलभुक् । चत्वार आत्मानोऽस्येति चतुरात्मा। जाग्रदभिमानिनः स्थूलसूक्ष्मकारणसाक्षिलक्षणाश्चत्वार आत्मानः प्रसिद्धाः । अन्यथा व्यवहारायोगाच्च । विश्वो वैश्वानर इति समष्टिव्यष्ट्यात्मनोरेकत्वमुक्तम् । प्रथमः पादः । एतत्पूर्वकत्वादुत्तरपादाधिगमस्य संहारक्रमे । सूक्ष्मप्रज्ञ इति । सूक्ष्मरूपवासनाविषयाऽस्य प्रज्ञेति । अङ्गमुखयोरपि वासनारूपत्वमेवात्र बोद्धव्यम् । स्वप्नेऽपि वासनामययोः स्थूलसूक्ष्मयोः प्रतीयमानत्वाच्चतूरूपत्वं न विरुध्यते । त्रिष्वपि स्थानेषु तत्त्वाप्रतिबोधलक्षणस्य स्वापस्य तुल्यत्वात् । पूर्वाभ्यां सुषुप्तं विभजते—यत्र सुप्त इति । प्राप्तविषयभोगकाले कस्यापि कामस्याभावात्तत्कालव्यावृत्त्यर्थमाह—न कंचन स्वप्नमिति । स्वप्नशब्देनान्यथाग्रहणमात्रं विवक्षितम् । यत्र न कंचन स्वप्नं पश्यतीत्येवोक्ते कामकालेऽपि विषयान्यथाभावलक्षणस्य स्वप्नदर्शनस्याभावात्तद्व्यावृत्त्यर्थं यत्र सुप्तो न कंचन कामं कामयत इत्युक्तम् । तृतीयं पादमाह—सुषुप्तस्थान इत्यादिना। असत्कार्यवादस्यायुक्तत्वाद्विद्यमानमप्यत्र सप्ताङ्गत्वमेकोनविंशतिमुखत्वं च न पृथक्सन्मात्राद्विभाव्यत इत्याह—एकीभूत इति । किमात्मकोऽसावेकीभाव इत्याकाङ्क्षायां सन्मात्ररूपप्रज्ञात्मक इत्याह—प्रज्ञानघन एवेति । जाग्रदादिप्रज्ञासविषयैकीभूतेयमवस्थेत्यर्थः । अत एव विशेषविज्ञानायासाभावादानन्दमय आनन्दप्रायो नाऽऽनन्द एव । दुःखबीजस्य विद्यमानत्वात् । अनेन सच्चिदानन्दाभासग्रस्तान्तर्मुखसन्मात्ररूपब्रह्मज्ञानात्मकसामान्यशरीरप्रवेशोपायः प्रदर्शितः । विश्वतैजसयोरिवास्यापि भोग्यमाह—आनन्दभुगिति । विषयदर्शनव्यग्रतया हीतरयोरवस्थयोः परमानन्दानुभवाभावः । ततोऽत्र तदभावात्स्वाभाविकपरमानन्दभोग उपपन्नः । प्रज्ञानघनरूपोऽयं सौषुप्त आत्मेति

---

१ ग. छ. 'स्थानोऽन्तःसु' । २ छ. सूक्ष्मः प्र' । ३ अ. 'नन्दभा' ।

कचेतोमुखश्चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पाद एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानां त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्ययमात्माऽथ चतुर्थश्चतुरात्मा तुरीयावसितत्वादेकैकस्योतानुज्ञात्रनुज्ञाविकल्पैस्त्रयमत्रापि सुषुप्तं स्वप्नं माया-

कथमवगम्यत इति चेत्स्वप्नजाग्रत्प्रज्ञाकारणत्वादित्याह—चेतोमुख इति। जाग्रदाद्यवस्थाचेतसां कारणभूत इत्यर्थः। स्थूलसूक्ष्मयोरपि घनरूपेण विद्यमानत्वादस्यापि चतूरूपत्वं स्यान्न ह्यसतः संभव उपपन्नः। तत्र सर्वं घनीभूतं विद्यते चेत्किमिति सर्वं न जानातीति चेद्येन सन्मात्ररूपेण सर्वस्यापि विद्यमानत्वं तदात्मना सर्वं जानात्येवेत्याह—प्राज्ञ इति। प्राज्ञस्य समष्ट्यभिमानिनैक्यमाह—ईश्वर इति। सर्वेश्वरत्वादिकमपि धर्मजातं सापेक्षत्वात्सबीजस्यैव प्राज्ञस्य संभवति न तु बीजस्य तुरीयस्येत्यत आह—एष सर्वेश्वर इत्यादि। सर्वयोनित्वे हेतुमाह—प्रभवाप्ययौ हि भूतानामिति। एवं पादत्रयमात्मन्यारोप्य तस्याज्ञानमिथ्याज्ञानरूपत्वेनावस्तुत्वमाह—त्रयमप्येतत्सुषुप्तं स्वप्नमिति। जाग्रदादिकमेतत्त्रयमपि सुषुप्तं न ह्यत्र किंचिदपि वस्तु ज्ञायते तत्त्वेन मूढैः स्वप्नरूपं चैतत्त्रयम्। अन्यथाज्ञानरूपत्वात्। तात्पर्यमाह—मायामात्रमिति। तत्र हेतुमाह—चिदेकरसो ह्ययमात्मेति। न हि चिदेकरसस्याऽऽत्मनो मायाव्यतिरेकेणोक्तवैचित्र्यं संभवतीत्यर्थः। तुरीयपादस्यापि सोपक्रमं चतूरूपत्वमाह—अथ चतुर्थश्चतुरात्मेति। चतुर्णामप्यात्मनां कथं तुरीयत्वं संभवतीत्यत आह—तुरीयावसितत्वादेकैकस्येति। एकैकस्य रूपस्येत्यर्थः। कै रूपैस्तुरीयस्य चतूरूपत्वमित्यत आह—ओतानुज्ञात्रनुज्ञाविकल्पैरिति। अविकल्पैरिति च्छेदः। ओतादीनां स्वरूपमुत्तरत्र वक्ष्यति। ननु चतूरूपत्वे तुरीयस्यानेकरसत्वं स्यादिति चेन्न रूपत्रयस्य कारण एवान्तर्भावादित्याह—त्रयमत्रापीत्यादिना। अत्रापि तुरीयपादे त्रयमोतानुज्ञात्रनुज्ञालक्षणं सुषुप्तं स्वप्नमित्युक्तार्थम्। अयं भावः। सच्चिदानन्दरूपस्य कारणसाक्षिणः सदादिरूपैः कारणव्याप्तिचिन्तनमोतयोगो नाम। तेन व्याप्तस्य कारणस्य स्वतःसत्ताद्यभावात्तदधीनसत्ताप्रकाशत्वेन तस्मिन्नध्यस्तं तदिति चिन्तनमनुज्ञातृयोगो नाम। तस्मिन्नध्य-

१ ग. घ. छ. °यमेत°।

मात्रं चिदेकरसो ह्यथायमादेशो न स्थूलप्रज्ञं न सूक्ष्मप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षण[1]मचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स एवाऽऽत्मा स विज्ञेय

स्तत्वात्तावन्मात्रमेतदिति चिन्तनमनुज्ञायोगो नाम । एतच्च योगत्रयमोतानुज्ञात्रनुज्ञारूपेण विभक्तेन प्रणवेन कार्यम् । ओतमित्यत्र तकारे लुप्ते सत्योमिति भवति । तस्मादोतशब्द एवायमोंकारः । तस्मादोतत्वगुणविशिष्टं ब्रह्मानेन प्रतिपत्तुं शक्यम् । अनुज्ञातृत्वानुज्ञात्वयोरप्योंकारे प्रसिद्धत्वात्तद्गुणविशिष्टमपि ब्रह्मानेनैवाविभक्तेन तुरीयेण प्रतिपत्तुं शक्यते । एतच्च योगत्रयं कारणप्रतिपत्त्यपेक्ष्यमिति कारण एवान्तर्भवतीति त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रमित्युक्तम् । तुरीयप्रधानत्वाच्चास्य योगत्रयस्य कारणसंहारकस्य तुरीयेऽप्यन्तर्भावो विद्यते तुरीयप्रधाना हि तदा बुद्धिवृत्ति[2]र्भवति । ततस्तुरीयपादरूपत्वमपि न विरुध्यत इति । एवं तुरीयपादत्रयस्य मिथ्यात्वमभिधाय पारमार्थिकं तुरीयस्य चतुर्थं रूपं निर्विशेषमिति विशेषप्रतिषेधमुखेनैवोपदेष्टुं शक्यत इत्याह—अथायमादेश इति । न स्थूलप्रज्ञमिति जाग्रदवस्थातदभिमानितद्भेदानां निषेधः । न सूक्ष्मप्रज्ञमिति स्वप्नादेः । नोभयतःप्रज्ञमिति जाग्रत्स्वप्नयोर्मध्यस्थस्य । न प्रज्ञमिति सामान्यज्ञानस्य । नाप्रज्ञमित्यचेतनत्वस्य । न प्रज्ञानघनमिति सुषुप्तावस्थादेरतोऽदृष्टं चक्षुषा । कर्मेन्द्रियैरप्यव्यवहार्यम् । श्रोत्रादिभिरप्यग्राह्यम् । अतोऽलक्षणमलिङ्गमननुमेयमित्यर्थः । केवलमनसाऽप्यचिन्त्यम् । अतः शब्दैरव्यपदेश्यम् । प्रमाणाभावान्नास्ति तर्हि तदिति चेन्नेत्याह—एकात्मप्रत्ययसारमिति । जाग्रदादिष्वेकोऽयमात्मेत्यव्यभिचारी सर्वप्राणिनां सूक्ष्मः स्वाभाविकोऽकृत्रिमः प्रत्ययः सततोदितस्तेन सारं सरणीयं तत्साधकत्वेन तद्विषयतयाऽनुसरणीयं तत्प्रमाणकमित्यर्थः । तथाऽपि प्रपञ्चोपशममुपशान्तप्रपञ्चम् । अतः शिवं निरुपद्रवसुखरूपम् । अतः शान्तमविक्रियम् । अविक्रियत्वादिधर्मकत्वमपि नास्तीत्याह—अद्वैतमिति । इत्येवं तुरीयपादस्य चतुर्थं रूपं मन्यन्ते ब्रह्मविदः । एवं सर्वविशेषविनिर्मुक्तं ब्रह्मात्मानमुपादिश्य मुमुक्षुं तज्ज्ञान एव नियमयति—स एवाऽऽत्मा स विज्ञेय इति । नन्वीश्वर एव

१ क. ग. घ. ङ. °णमलिङ्गम° । २ ङ. °द्रिर्भ° ।

ईश्वरग्रासस्तुरीयतुरीयः ॥ १ ॥

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीयषष्ठोपनिषदि प्रथमः खण्डः ॥ १ ॥

तं वा एतमात्मानं जाग्रत्यस्वप्नमसुषुप्तं स्वप्नेऽजाग्रतमसुषुप्तं सुषुप्तेऽजाग्रतमस्वप्नं तुरीयेऽजाग्रतमस्वप्नमसुषुप्तमव्यभिचारिणं नित्यानन्त[1]सदेक[2]रसं ह्येवं

---

विज्ञेयो नाऽऽत्मेत्याशङ्क्येश्वरस्यापि कारणात्मनः संहारकोऽयं ब्रह्मरूप आत्मा तस्मात्स एव परमेश्वरो ज्ञेय इत्याह—ईश्वरग्रास इति । ईश्वरमपि कारणात्मानं स्वासाधारणवृत्त्यारूढः सन्ग्रसतीतीश्वरग्रासः । यस्मात्तुरीयतुरीय ईश्वरमपि ग्रसति तस्मात्तस्यैवाऽऽत्मशब्दयोग्यता । तस्मात्स एवाऽऽत्मा तस्मात्स एव विज्ञेयस्तदनुभवार्थमेव प्रयत्नोऽनुष्ठेय इत्यर्थः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्रीमद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीये षष्ठोपनिषदि प्रथमः खण्डः ॥ १ ॥

---

यदुक्तं त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रमिति तत्संग्रहेण चिदेकरसो ह्रीत्युपपादितम् । पुनरपि सहेतुकस्य तस्यैव विस्तरेण प्रतिपादनाय मात्रापादैक्यं प्रदर्श्य प्रणवोच्चारणेन सर्वसंहारपूर्वकं विदुषस्तुरीयमात्ररूपत्वप्रदर्शनाय खण्डान्तरारम्भः—तं वा एतमिति । तत्र प्रथममागमापायितद्वध्यन्वयव्यतिरेकमाश्रित्यावस्थात्रयस्य व्यभिचारित्वेनाव्यभिचारिण्यात्मनि कल्पितत्वमाह—तमित्यादिना । तमित्युक्तं तुरीयं परामृशति । एतमित्यस्यैवावस्थात्रयानुगतिं दर्शयत्यव्यभिचारित्वोपपादनाय । अथ जाग्रदादित्रयस्येतरेतरव्यभिचारित्वं तुरीये सर्वव्यभिचारं च साधयति—जाग्रत्यस्वप्नमसुषुप्तमित्यारभ्य तुरीयेऽजाग्रतमस्वप्नमसुषुप्तमित्यन्तेन । चतुष्पादं मात्राभिरोंकारेण चैकी कुर्यादित्युत्तरत्र द्वितीयान्तानां सर्वेषां पदानामन्वयः । आत्मनस्त्वनात्मवन्न व्यभिचारः सर्वकल्पनाधिष्ठानत्वेन सर्वबाधावधित्वेन चेत्याह—अव्यभिचारिणमिति । उक्तान्वयव्यतिरेकफलमाह—नित्यानन्तसदेकरसं ह्येवमिति । एवं सति नित्यत्वमानन्त्यं परमार्थसत्त्वं चाऽऽत्मनः सिद्धमित्यर्थः । अवस्थात्रयानुगमान्नित्यत्वम् । तद्व्यापकत्वादानन्त्यम् । व्यभिचारित्वेन कल्पितस्यासतः परमार्थसद्रूपाधिष्ठानापेक्षत्वात्सत्त्वम् । कल्पितस्याधिष्ठानव्यतिरेकेणाभावादेकर-

---

१ क. झ. छ. 'नन्दं स' । ग. 'नन्दस' २ क. ग. घ. छ. सदैक' ।

चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा ततः सर्वस्मादस्मादन्यो विलक्षणश्चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचः साक्षी मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी सर्वस्य साक्षी ततोऽविक्रियो महाचैतन्योऽस्मात्सर्वस्मात्प्रियतम आनन्दघनं ह्येवमस्मात्सर्वस्मात्पुरतः सुविभातमेकरसमेवाजरममरममृतमभयं ब्रह्मैवा-

सत्वम् । अथ द्रष्टृदृश्यान्वयव्यतिरेकमाह—चक्षुषो द्रष्टेत्यारभ्य सर्वस्य द्रष्टेत्यन्तेन । चक्षुःश्रोत्राभ्यां रूपनामविषयाभ्यामवशिष्टमपि ज्ञानेन्द्रियत्रयं गृह्णाति । वाचा शब्दनिर्वर्तिकयाऽवशिष्टमपि कर्मेन्द्रियग्रहणम् । ज्ञानक्रियाशक्तिसमष्टिरूपाभ्यां मनःप्राणाभ्यां तद्वृत्तिग्रहणम् । तम इति कारणमुक्तम् । उक्तानुक्तविषयद्रष्टृत्वं संक्षिप्याऽऽह—सर्वस्येति । उक्तान्वयव्यतिरेकफलमाह—ततः सर्वस्मादिति । ततो द्रष्टृत्वेन सर्वत्रान्वयाव्यभिचारिणो दृश्यादन्यत्वम् । तस्माद्वैलक्षण्यं चाऽऽत्मनो घटद्रष्टृवत्सिद्धमित्यर्थः । प्रथमान्तानां चैषां पदानां द्वितीयान्तत्वेन परिणतानामुत्तरत्रैवान्वयः । अथ साक्षिसाक्ष्यान्वयव्यतिरेकमाह—चक्षुषः साक्षीत्यारभ्य सर्वस्य साक्षीत्यन्तेन । अस्यान्वयव्यतिरेकस्य फलमाह—ततोऽविक्रियो महाचैतन्य इति । ततः सर्वसाक्षित्वेनाविक्रियत्वं महत्त्वं चिद्रूपत्वं च सिद्धमित्यर्थः । दुःखिपरमप्रेमास्पदान्वयव्यतिरेकमाह—अस्मात्सर्वस्मात्प्रियतम इति । अस्मात्पुत्रवित्तादेश्चक्षुःश्रोत्रादेश्च प्रियतमस्तच्छेषत्वेन हि तेषां प्रियत्वं न स्वतः । आत्मनस्तु स्वत एव प्रियत्वम् । अतः परमप्रेमास्पदत्वात्परमानन्दरूपोऽयमात्मेति । अस्यान्वयव्यतिरेकस्य फलमाह—आनन्दघनं ह्येवमिति । द्वितीयाया उक्त एवान्वयः । एवमन्वयव्यतिरेकचतुष्टयेन सच्चिदानन्दानन्तात्मरूपत्वं प्रसाध्य सच्चिदाभेदेनानेकरसत्वमाशङ्क्य तद्व्युदासार्थमाह—अस्मात्सर्वस्मात्पुरतः सुविभातमेकरसमेवेति । अस्मात्सच्चिदादिवाच्यभेदप्रत्ययात्पुरतः पूर्वमेव सुष्ठु विस्पष्टं तद्भेदसाक्षित्वेन भातीत्यनृतादिविरुद्धरूप आत्मा तथोक्तः । तत्फलमाह—एकरसमेवेति । एवं ब्रह्मलक्षणलक्षितत्वाद्ब्रह्मैवायमात्मेत्याह—अजरममरममृतमभयं ब्रह्मैवेति । अजरमित्येकदेशनाशप्रतिषेधः । अमृतमिति सर्वनाशनिषेधः । तस्मादभयं ब्रह्म

प्यजयैनं चतुष्पादं मात्राभिरोंकारेण चैकी कुर्याज्जागरितस्थानश्चतुरात्मा विश्वो वैश्वानरश्चतूरूपोऽकार एव चतूरूपो ह्ययमकारः स्थूलसूक्ष्मबीजसाक्षिभिरकाररूपैराप्तेरादिमत्त्वाद्वा स्थूलत्वात्सूक्ष्मत्वाद्बीजत्वात्साक्षित्वाच्चाऽऽप्नोति ह वा इदं सर्वमादिश्च भवति य एवं वेद स्वप्नस्थानश्चतुरात्मा तैजसो हिरण्यगर्भश्चतूरूप उकार एव चतूरूपो ह्यय-

---

तदेवायमात्मेत्यर्थः । कथं तर्हि तस्य चतुष्पात्त्वमुक्तमिति । अनाद्यविद्याकल्पितं तदित्याह—अप्यजयैनं चतुष्पादमिति । ब्रह्मस्वरूपमप्येनमजयाऽनाद्यविद्यया मायया चतुष्पादम् । किमित्याह—मात्राभिरोंकारेण चैकी कुर्यादिति । मात्रा अकाराद्याः । ओंकारस्तास्वनुगत ओतानुज्ञात्रनुज्ञाविकल्परूपः । कस्य पादस्य कया मात्रयैक्यमित्याह—जागरितस्थान इत्यादिना । जागरितस्थानश्चतुरात्मा विश्वो वैश्वानर इत्युक्तानुवादः । तस्य वैखर्यादिभेदेन चतुरात्मनाऽकारेणैक्यमाह—चतूरूपोऽकार एवेति । अकारस्य चतूरूपत्वमसिद्धमिति नेत्याह—चतूरूपो ह्ययमकार इति । कथं प्रसिद्धिरपीत्यत आह—स्थूलसूक्ष्मबीजसाक्षिभिरकाररूपैरिति । स्थूलादिविमर्शरूपवैखरीमध्यमापश्यन्तीपरारूपबीजबिन्दुनादशक्तिभिरकाररूपैरित्यर्थः । केन सामान्येनाकारविराडात्मनोरेकत्वं निर्णीयत इत्याह—आप्तेरादिमत्त्वाद्वेति । अकारस्य तावत्सर्ववर्णव्याप्तिः प्रसिद्धा । विराजश्च विश्वरूपात्मत्वेन व्याप्तिः सिद्धैव । तेन व्याप्तिसामान्येन तावदेकत्वं प्रतिपत्तुं शक्यते नामरूपात्मनोरकारविराजोः स्थूलविमर्शप्रकाशात्मनोरादिमत्त्वाद्वा सामान्यात्तयोरैक्यं फलविशेषकामस्य प्रतिपत्तव्यम् । मात्राणामादिरकारो विश्वश्च पादानाम् । एवं विश्वाकारयोः सामान्येनैकत्वं प्रति साम्यद्वयमभिधाय विशेषेण रूपचतुष्टयैकत्वप्रतिपत्तावपि सामान्यानि क्रमेणाऽऽह—स्थूलत्वादित्यादिना । वाचकं हि वैखर्यादिकं स्थूलादिविमर्शरूपं तद्वदेव स्थूलादिरूपमभ्युपगन्तव्यमित्यभिप्रायः । एवंविदोऽवान्तरफलमाह—आप्नोति ह वा इत्यादिना । परमफलं हि स्वरूपावस्थानमेव पादादिकल्पनायाः । आप्नोति प्राप्नोति ह वा एव । इदं सर्वं भोग्यजातम् । आदिः प्रधानं च भवति । एवमुक्तमेकत्वं

मुकारः स्थूलसूक्ष्मबीजसाक्षिभिरुकाररूपैरुत्कर्षादुभयत्वाद्वा स्थूलत्वात्सूक्ष्मत्वाद्बीजत्वात्साक्षित्वाच्चोत्कर्षति ह वै ज्ञानसंततिं समानश्च भवति य एवं वेद सुषुप्तस्थानश्चतुरात्मा प्राज्ञ ईश्वरश्चतूरूपो मकार एव चतूरूपो ह्ययं मकारः स्थूलसूक्ष्मबीजसाक्षिभिर्मकाररूपैर्मितेरपीतेर्वा स्थूलत्वात्सूक्ष्मत्वाद्बीजत्वात्साक्षित्वाच्च मिनोति ह वा इदं सर्वमपीतिश्च

वेद । स्वप्नस्थान इत्यादिना तैजसोकारतद्रूपाणामैकत्वमाह—उत्कर्षादुभयत्वाद्वेति । तैजसोकारयोः सामान्येनैकत्वप्रतिपत्तौ कारणद्वयमुक्तम् । अकारादुत्कृष्ट ऊर्ध्वमाकृष्ट इव ह्युकारः प्रणवोच्चारणे दृश्यते । तैजसश्च विश्वात्स्वप्नादिष्वकारादुत्कृष्ट उत्तमो वोकारो व्याप्त्यतिशयात् । बलातिशयाच्च । अकारस्थानं कण्ठं व्याप्यातिक्रम्यौष्ठस्थाने हि स्थितस्याभिव्यक्तिः । ततोऽकारादपि व्याप्तत्वेनोत्तम उकारो विराज इव हिरण्यगर्भः । बलातिशयवत्त्वं च स्वरप्रयत्नव्यङ्ग्यत्वात्प्रणवस्थोकारस्य मन्दप्रयत्नव्यङ्ग्यमकारमपेक्ष्य भवति । उभयत्वं च मध्यत्वमुभयोः समानम् । एवंविदः फलमाह—उत्कर्षति ह वै ज्ञानसंततिं समानश्च भवति य एवं वेदेति । उत्कर्षयति वर्धयतीत्यर्थः । समानस्तुल्यो भवति शत्रुपक्षस्याप्यप्रद्वेष्यो भवतीत्यर्थः । सुषुप्त इत्यादिना प्राज्ञमकारयोरेकत्वमाह । मितेरपीतेर्वेत्येकत्वे सामान्यकथनम् । मितिर्मानं मीयेते इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्यां प्रस्थेनेव यवास्तथोंकारसमाप्तौ पुनः पुनः प्रयोगे च प्रविश्य निर्गताविवाकारोकारौ मकारेऽपीतिरप्यय एकीभावः । ओंकारोच्चारणेऽन्त्येऽक्षर एकीभूताविवाकारोकारौ तथा सुषुप्ते प्राज्ञे विश्वतैजसौ । एवंविदः फलमाह—मिनोतीत्यादिना । मिनोतीति जाग्रदादियाथात्म्यं जानातीत्यर्थः । अपीतिश्च जगत्कारणात्मा च भवति । प्रतिज्ञातं पादत्रयस्य मात्रात्रयस्य च स्वात्मन एवोत्पत्तिं स्वात्मन्येव स्थितिं लयं च स्वात्मनस्तत्प्रवेशित्वं तन्नियन्तृत्वं च जानाति । एवंविदकारस्योक्तरूपविराड्वाचकत्वेन तदुच्चारणकाले तज्जन्यवृत्त्यारूढं विराजं संचिन्त्यो-

१ ट. व्याप्ताति' । २ ट. 'गङ्भावक' ।

भवति य एवं वेद मात्रा मात्राः प्रतिमात्राः कुर्यादथ तुरीय ईश्वरग्रासः स्वराट्स्वयमीश्वरः स्वप्रकाशश्चतुरात्मोतानुज्ञात्रनुज्ञाविकल्पैरोतो ह्ययमात्मा यथेदं सर्वमन्तकाले कालाग्निसूर्य उस्रैरनुज्ञाता ह्ययमात्माऽस्य सर्वस्य

कारोच्चारणसमये तद्वृत्त्यारूढं हिरण्यगर्भं विराजोऽपि कारणभूतं चिन्तयन्विराजं तावन्मात्रतया विलाप्य मकारोच्चारणकाले तद्वृत्त्यारूढं कारणात्मानमीश्वरं संचिन्त्य हिरण्यगर्भं तावन्मात्रतया संहृत्य स्वयमीश्वरात्मा भवेदित्याह— मात्रा मात्राः प्रतिमात्राः कुर्यादिति। मात्रा अकाराद्याः प्रतिमात्रा उकाराद्याः। अकारस्य प्रतिमात्रोकारस्तत्प्रातिलोम्येन तत्संहारकत्वेन स्थितत्वादुकारस्य मकारः प्रतिमात्रा मकारस्य तुरीयः प्रणवः प्रतिमात्रा। अथेश्वररूपकारणसंहारार्थं तुरीयं पादं मत्वाऽऽह—अथ तुरीय इत्यादिना। ईश्वरं कारणात्मानं ग्रसतीतीश्वरग्रासः। ननु तमप्यन्यो ग्रसिष्यतीति न तत्प्राप्तिरपि पुरुषार्थ इति चेन्न तद्ग्रसनसमर्थस्यान्यस्याभावादित्याह—स्वराडिति। नन्वीश्वरग्रासेऽनीश्वरोऽसमर्थः स्यादिति नेत्याह—स्वयमीश्वर इति। सापेक्ष्यं हीतरस्येश्वरस्यैश्वर्यमतोऽनीश्वर एव सः। अयं तु तुरीयः स्वयमेवेशितव्यमनपेक्ष्यैवेश्वरः स्वतन्त्र इत्यर्थः। न ह्यस्य सच्चिदानन्दरूपस्य नित्यस्य तुरीयस्य सत्तायां स्फूर्तौ पुरुषार्थत्वे वा किंचिदपेक्ष्यमस्तीति स्वातन्त्र्यमस्य सिद्धम्। तत्साधकं किमपि प्रमाणमपेक्षणीयमिति चेन्न स्वप्रकाशत्वादित्याह—स्वप्रकाश इति। तुरीयस्यापि विश्वादिवच्चतूरूपत्वमुक्तमनुवदति प्रतिपादयितुम्। चतुरात्मोतानुज्ञात्रनुज्ञाविकल्पैरिति। तत्रोतत्वं व्यापकत्वं सदृष्टान्तमुपपादयति—ओतो हीत्यादिना। यथा कालाग्निसूर्यौ प्रलयकाले स्वात्ममात्रतया सर्वं संहर्तुं प्रवृत्तावुस्रैः स्वदीप्तिभिः सर्वं बाह्याभ्यन्तरं व्याप्नुतस्तद्वत्तुरीयात्मा सच्चिद्रश्मिभ्यां कारणं स्वात्ममात्रतया सर्वं संहर्तुं व्याप्नोतीत्यर्थः। अनुज्ञातृत्वमप्युपपादयति— अनुज्ञाता हीति। कस्य किमनुजानातीत्यत आह—अस्येति। इदं हि सर्वं सच्चिद्रूपेणोक्तत्वात्तद्व्यतिरेकेण निरात्मकम्। निरूपणायां व्यवहारे च घटसंविद्घटसत्तेत्यादिप्रकारेण स्वतः सात्मकमिव भाति। न च स्वतः सदादिरूपेणाऽऽत्मना स्वात्मप्रदाने तस्यैवं भानं संभवति। ततस्तदपेक्षितं स्वात्मानं ददाति यथा रज्जुः सर्पस्येत्यर्थः। तर्हि तुरीयस्यानात्मत्वप्रसक्तिरिति चेद्यतो

स्वात्मानं ददातीदं सर्वं स्वात्मानमेव करोति यथा तमः सविताऽनुज्ञैकरसो ह्ययमात्मा चिद्रूप एव यथा दाह्यं दग्ध्वाऽग्निरविकल्पो ह्ययमात्माऽवाङ्मनोगोचरत्वाच्चिद्रूपश्चतूरूप ओंकार एव चतूरूपो ह्ययमोंकार ओतानुज्ञात्रनुज्ञाविकल्पैरोंकाररूपैरात्मैव नामरूपात्मकं हीदं सर्वं

न तथाऽऽत्मानं ददातीत्याह—इदं सर्वं स्वात्मानमेव करोतीति । स्वात्मन्यध्यस्ततया स्वात्मना स्वात्मकमवभासयतीत्यर्थः । तत्र दृष्टान्तमाह—यथा तमः सवितेति । यथा नक्तंदृशा सवितर्यध्यस्तं तमः सविता स्वात्ममात्रमेव करोति तद्वदित्यर्थः । अनुज्ञात्वमुपपादयति—अनुज्ञैकरस इति । किं तदनुज्ञैकरसत्वमिति तदाह—चिद्रूप एवेति । दृष्टान्तमाह—यथेति । यथा खलु प्रकृतः कालाग्निः सर्वं दाह्यं दग्ध्वा स्वयं निर्विशेषो भवति एवं स्वात्मन्यध्यस्तं कारणं स्वात्मतावन्मात्रमिति बुद्ध्वाऽऽत्मा चिदेकरसो भवतीति नानुज्ञातृत्वमस्ति किं त्वनुज्ञात्वं चिन्मात्रमेवास्य विद्यत इत्यर्थः । अविकल्परूपत्वमुपपादयति—अविकल्पो हीति। तत्र हेतुमाह—अवाङ्मनोगोचरत्वादिति। किंरूपोऽसावविकल्प आत्मेति तदाह—चिद्रूप इति। एवं तुरीयस्याऽऽत्मनश्चतूरूपत्वमुपपाद्य तस्य चतूरूपेण तुरीयप्रणवेनैक्यमाह—चतूरूप ओंकार एवेति। ओंकारस्य चतूरूपत्वमसिद्धमिति नेत्याह—चतूरूपो ह्ययमोंकार इति। कैरूपैश्चतूरूपत्वमित्यत आह—ओतानुज्ञात्रनुज्ञाविकल्पैरोंकाररूपैरिति। आत्मनो ह्युक्तप्रकारेणोतादिरूपत्वं संभवति । ओंकारस्य तु कथमोतादिरूपत्वमित्याशङ्क्याऽऽत्मनश्चतूरूपत्ववत्तद्वाचकस्योंकारस्य तदभ्युपगन्तव्यमित्याह—आत्मैवेति। आत्मवदोंकारोऽप्योतादिभिश्चतुरात्मेत्यर्थः । अस्तूक्तप्रकारेणाऽऽत्मनस्तुरीयस्य चतूरूपत्वं तद्वाचकस्य तु मा भूदिति चेन्न। वाचकस्य चतूरूपत्वाभावे वाच्यस्य चतूरूपत्वप्रत्यवमर्शानुपपत्तेस्तदभावप्रसङ्गात्तद्विमर्शे तु स एव विमर्शो वाचकः। ओंकार इत्योंकारस्यापि नाम्नो रूपात्मकवाच्यवच्चतूरूपत्वं सिद्धमित्याह—नामरूपात्मकं हीदं सर्वमिति । नामरूपयोः परस्पराविनाभावादेकस्य चतुरात्मत्वे सिद्धेऽन्यस्यापि तत्सिद्धमेवेत्यर्थः। एवं वाच्यवा-

१ क. दर्शयती॰ । २ ग. घ. ॰दाति यदि सर्वमिदं दर्शयति स्वा॰ । ३ छ. ञ. ॰ना मात्म॰ ।

तुरीयत्वाच्चिद्रूपत्वादोतत्वादनुज्ञातृत्वादनुज्ञात्वा-
दविकल्परूपत्वान्नाविकल्परूपं हीदं सर्वं नैव
तत्र काचन भिदाऽस्त्यथ तस्यायमादेशोऽ-
मात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽ-
द्वैत ओंकार आत्मैव संविशत्यात्मनाऽऽत्मानं
य एवं वेदैष वीरो नारसिंहेन वाऽनुष्टुभा
मन्त्रराजेन तुरीयं विद्यादेष ह्यात्मानं प्रकाशयति

चक्रयोश्चातुर्विध्यमुपपाद्य तयोरैक्ये सामान्यद्वयमाह—तुरीयत्वाच्चिद्रूपत्वाद्वेति। रूपाणामैक्ये सामान्यान्याह—ओतत्वादित्यादिना। ओतादिरूपाणि क्रमेणाविकल्पे विलापनीयानीत्याह—अविकल्परूपं हीदं सर्वमिति। पूर्वत्र प्राप्तो वाच्यवाचकरूपो भेदो विकल्पो नास्तीत्याह—नैव तत्र काचन भिदाऽस्तीति। न चेत्तत्र वाचकभेदोऽस्ति कथं तर्हि तस्योपदेश इत्यन्यनिषेधमुखेनेत्याह—अथ तस्यायमादेश इति। पूर्वमपि निषेधमुखेन तुरीयोपदेशप्रकार उक्तः। तत्र वाच्यप्रतिषेधप्राधान्येनोपदेश इह तु वाचकनिषेधप्राधान्येनेति विशेषः। उपदेशप्रकारमाह—अमात्र इत्यादिना। अमात्रो मात्रा अस्य न विद्यन्त इत्यमात्रः। चतुर्थस्तुरीय ओंकारोऽत्र विशेष्यतेऽमात्रादिविशेषणैरमात्रत्वादनुच्चार्य इत्याह—अव्यवहार्य इति। कुतोऽमात्र इत्युपशान्तवाच्यवाचकप्रपञ्चत्वादित्याह—प्रपञ्चोपशम इति। अत एव शिवः। अव्यवहार्यत्वादिधर्मोऽप्यस्य नास्तीत्याह—अद्वैत इति। यस्मादेवंविधोऽयमोंकारस्तस्मात्तुरीय आत्मैवायमित्याह—ओंकार आत्मैवेति। एवंविदः फलमाह—संविशत्यात्मनाऽऽत्मानं य एवं वेदेति। आत्मना स्वेनैव प्रणवरूपेणाऽऽत्मानं स्वयमेव प्रविशतीत्यर्थः। एवं प्रतिपत्तुर्न पुनः संसारपरिभव इत्याह—एष वीर इति। एवं तुरीयप्रणवेन तुरीयप्रतिपत्तिमभिधाय मन्दस्य नृसिंहानुष्टुभाऽपि तुरीयं प्रतिपत्तव्यमित्याह—नारसिंहेन वाऽनुष्टुभा मन्त्रराजेन तुरीयं विद्यादिति। ननु तुरीयवाचकेन मन्त्रराजेन कथं तत्प्रतिपत्तिरित्याशङ्क्य तस्य तद्वाचकत्वमाह—एष ह्यात्मानं प्रकाशयतीति। अथवा मन्दस्य मन्त्रराजेन तुरीयप्रतिपत्तौ को विशेष इत्याशङ्क्याऽऽह—एष हीति। कथं मन्त्रराजस्य तुरीयवाचकत्वमित्याकाङ्क्षायां तत्प्रकारप्रदर्शनाय मन्त्रार्थ-

१ छ. 'मात्मादे'। २ छ. 'द्वैतानु'। ३ ज. 'त्याप्याह'।

सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तः
सदोज्ज्वलोऽविद्याकार्यहीनः स्वात्मबन्धहरः

माह—सर्वसंहारसमर्थ इत्यादिना । तत्रोग्रमित्यस्य पदस्य तुरीयबोधकतां दर्शयंस्तस्यार्थमाह—सर्वसंहारसमर्थ इति । न हि तुरीयादन्यस्य जडस्य सर्वसंहारसामर्थ्यं संभवति । अतः संहारसमर्थवाचक उग्रशब्दः । सर्वद्वैतसंहारसमर्थं तुरीयमेव लक्षणया प्रकाशयतीत्यर्थः । लोके संहारसमर्थोऽपि मन्दप्रस्थानः कश्चित्संहार्यमसंहरन्दृष्ट इति तुरीयोऽपि तथा स्यादिति तस्यापि संहारसामर्थ्यं न निर्णेतुं शक्यमित्याशङ्कायां तद्व्यावर्तकत्वेन वीरमित्यपि पदमर्थतस्तुरीयप्रतिपत्तौ विनियोजयति—परिभवासह इति । न लौकिकमन्दपुरुषवदयं मन्दप्रस्थानः परिभवसहिष्णुरतः संहरत्येव सदा संहार्यमविद्यादिलक्षणं जगत्ततश्च तत्सामर्थ्यमस्य निर्णेतुं शक्यत इत्यर्थः । परिभवासहिष्णुरपि प्रतिबन्धसंभवान्न संहरतीत्याशङ्कायां तद्व्यावर्तकत्वेन महाविष्णुमित्यत्र महत्पदमर्थतोऽवतारयति—प्रभुरिति । महाप्रभुत्वान्न प्रतिबन्धुं शक्यत इत्यर्थः । समर्थस्य परिभवासहिष्णोः प्रतिबन्धहीनस्यापि सर्वत्र व्याप्त्यभावेन सर्वसंहर्तृत्वं न संभवति साऽप्यनुपपत्तिरत्र नास्तीति वदन्विष्णुमिति पदमर्थतोऽवतारयति—व्याप्त इति । उक्तसामग्रीसद्भावेऽपि येन प्रमाणेनाभिज्वलितः सन्सर्वं संहरति तन्न संहर्तुं युक्तमुपकारकत्वादित्याशङ्कायां निर्विकारत्वान्न प्रमाणसापेक्ष्यमस्याभिज्वलनं किंतु सर्वद्वैतविरुद्धस्वप्रकाशचिद्रूपत्वेन सदैवाभिज्वलितः सर्वदा संहृतसकलद्वैतश्च परमार्थ इति वदञ्ज्वलन्तमितिपदमवतारयति—सदोज्ज्वल इति । तथाऽपि लौकिकसंहर्तुरसंहार्यं रक्षणीयं च स्वकार्यकरणादि दृष्टं तद्वदस्यापि स्वाभाविकमसंहार्यं किमप्यभ्युपगन्तव्यमित्याशङ्कायां नास्य लौकिकपुरुषवदविद्यातत्कार्ययोरहंममाभिमानोऽस्ति येनासंहार्यं तद्रक्षणीयं स्यात् । तस्मात्स्वमहिमस्थो निरपेक्षः सर्वमेव संहरतीति वक्तुं सर्वतोमुखमितिपदमर्थतोऽवतारयति—अविद्याकार्यहीन इति । सर्वतः सर्वत्र मुखं यस्य । मुखशब्देनोपलब्धिरविद्यातत्कार्यासंस्पृष्टस्वप्रकाशोच्यते । अतः सर्वत्रोपलब्धिस्वरूप एवायं न विजातीयमसंहार्यं किमप्यत्रास्तीति सर्वतोमुखपदस्यार्थः । एवंभूतो महाप्रभुः किमर्थमतिदुर्बलं द्वैतजातं संहरतीत्याकाङ्क्षायां स्वानर्थप्रतिभासहेतुत्वादिति वदन्नृसिंहपदमवतारयति—स्वात्मबन्धहर इति । नॄ गताविति धातो रूपेण नृशब्देन त्रिविधपरिच्छेदरहित आत्मोच्यते षिञ् बन्धन इति धातोः

१ ग. घ. छ. 'द्यातत्कार्य' । २ ट. 'वात्मप्र' । ३ ट. 'द्वमस्य स्वा' ।

# सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठान-
# सन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति

सिमिति तद्बन्धकमविद्यालक्षणं द्वैतं हमिति च तत्संहर्तृत्वमुच्यते । अतो नृसिंहपदस्य स्वात्मबन्धहर इत्यर्थोक्तिरुपपन्ना । नन्वेवंरूपत्वेऽप्येवंविवेकात्प्राग्यथा द्वैतं तत्पराभवसहिष्णुत्वं च तथैव सर्वदाऽस्तीत्याशङ्कायां न कदाचिदप्यस्य परमार्थतो द्वैतपरिभव इति वदन्भीषणपदमवतारयति—सर्वदा द्वैतरहित इति । न हि महास्फुरणस्वभावमेतं तमः स्वनाशभयात्कदाचिदपि परमार्थतः स्पृशति मध्याह्नभास्करमिवेति भीषणपदस्यार्थ इति भावः । ननु सर्वद्वैतसंहारे सुखसाधनाभावादपुरुषार्थत्वं स्यादस्यातो न सर्वं संहर्तव्यमित्याशङ्क्य स्वत एव परमानन्दानुभवरूपत्वमाह भद्रपदेन । आनन्दरूप इति । ननु नित्यस्य कारणस्यापि संहारे स्वात्मनोऽपि तत्प्रसङ्गोऽतो न संहरत्ययं सर्वमित्याशङ्क्याध्यस्तस्याऽऽत्मीज्ञानलक्षणस्य कारणस्याधिष्ठानज्ञानेन नाशेऽपि परमार्थं सद्रूपमनध्यस्तमबाधितं पूर्ववत्स्वमहिमस्थमेव भवतीति परिहरति मृत्युमृत्युपदेन । सर्वाधिष्ठानसन्मात्र इति । पूर्वमृत्युशब्देन संततमरणशीलं सर्वात्मकमज्ञानमुच्यते तस्य संहर्ता मृत्युमृत्युः । सर्वदा मरणशीलमेवाज्ञानं नित्यकल्पितम् । अयं तु तन्मृत्युत्वेन सर्वदाऽमृत एव । अतो न तन्नाशेनास्य नाशप्रसङ्गः किंतु पूर्वमधिष्ठानत्वेनोत्तरत्र बाधावधित्वेन तत्साक्षितयाऽपि चावशिष्यत इति मृत्युमृत्युपदस्यार्थ इति भावः । यस्मादेवं सर्वसंहारसमर्थः परिभवासहो निष्प्रतिबन्धः सर्वसंहार्यकवलीकरणस्वभावो निरपेक्षो रक्षणीयशून्यः स्वात्मबन्धहरो भयंकरः परमानन्दानुभवः परमार्थसद्रूपः परमात्मेति नाविद्यादिलक्षणद्वैतमस्मिन्कदाचिदप्युपपद्यते तस्मात्तदत्र कालत्रयेऽपि नास्तीति वदन्नमामीत्यस्यार्थमाह—निरस्ताविद्यातमोमोह इति । अविद्येति विद्याविरोधित्वकथनेन निवर्तयितुं शक्यतोक्ता । तम इत्याच्छादकत्वेन निरसनीयत्वम् । मोह इति विक्षेपहेतुत्वेन निरसनीयत्वमेवोक्तम् । अविद्यादिलक्षणमनर्थकारणं नित्यमेव निरस्तं यस्मिन्स तथोक्तः । नमामीत्यत्र नकारो निषेधार्थः । मेति प्रमावाचकत्वेन परिपूर्णानन्दसंविद्रूपतुरीयवाचकः । मीति तद्धिंसाकरं तदाच्छादनविक्षेपकारणभूतमज्ञानमुच्यते । तस्मान्मीति हिंसाकरं नास्तीति नमामिपदस्यार्थ इति भावः । उक्तं च—"मीति हिंसाकरं नात्र तमोज्ञानादिलक्षणम्" इति । किं तर्ह्यस्तीत्याकाङ्क्षायां तुरीयः प्रत्यगात्मैवेति वदन्नहंपदार्थमाह—अहमेवेति । एवकारोऽहंकारप्रसङ्गेन प्राप्तसर्वद्वैतनिषेधार्थः । इतिशब्दो मन्त्रव्या-

१ क. घ. छ. ºज्ञानः सº ।

तस्मादेवमेवेममात्मानं परं ब्रह्मानुसंदध्यादेष वीरो नृसिंह एव ॥ २ ॥

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीये षष्ठोपनिषदि द्वितीयः खण्डः ॥ २ ॥

तस्य ह वै प्रणवस्य या पूर्वा मात्रा सा प्रथमपादो[1]भयतो भवति द्वितीया द्वितीयस्य तृतीया

ख्यानसमाप्त्यर्थः । अत्र मन्त्रव्याख्याने प्रथमयैव विभक्त्या व्याख्यातत्वान्मन्त्रस्य तुरीयप्रतिपत्तिशेषत्वे द्वितीयार्थोऽविवक्षित इति केचिदाहुः । अपरे तु सप्तम्यर्थे द्वितीयामाश्रित्य नमामीतिपदेन संबन्धमाहुः । उग्रे नमामीति हिंसाकरं नास्तीत्यादिप्रकारेण । वार्तिककारैस्तु द्वितीयान्तपदानां सप्तम्यर्थता स्वीकृतेति गम्यते मीति हिंसाकरं नात्रेतिसप्तमीप्रयोगदर्शनात् । अत्रोग्रे वीरे विष्णौ मीति हिंसाकरं नेत्यादिप्रकारेण हि तस्यार्थो युज्यते । यस्मादुक्तेन प्रकारेणानुष्टुभस्तुरीयप्रकाशकत्वं सिद्धं तस्मादुक्तेनैव प्रकारेणेमं प्रत्यगात्मानं तुरीयं परं ब्रह्माऽऽचार्योपदेशमनुजानीयादित्याह—तस्मादिति । एवंप्रतिपत्तुर्न पुनः संसारपरिभव इत्याह—एष वीर इति । कथं वीर इति नृसिंहत्वादित्याह—नृसिंह एवेति ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्रीमद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीये षष्ठोपनिषदि द्वितीयः खण्डः ॥ २ ॥

---

तुरीयमात्रयाऽनुष्टुभा च तुरीयप्रतिपत्तिरभिहिताऽथेदानीं मात्राचतुष्टयमनुष्टुप्पादचतुष्टयं च मिश्रीकृत्य विराडादिपादचतुष्टयस्योपासनं वक्तव्यमिति खण्डान्तरारम्भः—तस्येति । तस्योमित्येतदक्षरमित्युक्तप्रणवस्य या पूर्वा मात्राऽकारो विराड्वाचकः सा मात्राऽनुष्टुप्प्रथमपादस्य विराडर्थस्योभयतः पूर्वोत्तरभागयोर्विराट्चिन्तनार्थं भवति । ततश्चामुग्रं वीरं महाविष्णुममित्येवं मन्त्रोच्चारः सिद्धो भवति । अत्राकारो बीजबिन्दुनादशक्त्यन्तः प्रयोक्तव्यश्चतुरात्मकविराड्वाचकत्वात् । तस्य द्वितीया मात्रोकारो हिरण्यगर्भार्थः । साऽनुष्टुब्द्वितीयपादस्य हिरण्यगर्भार्थस्योभयतः पूर्ववद्भवति । एवं तृतीया मात्रा मकार ईश्व-

---

१ क. ग. घ. छ. 'थमः पादो भव' ।

तृतीयस्य चतुर्थ्योतानुज्ञात्रनुज्ञाविकल्परूपा तया तुरीयं चतुरात्मानमन्विष्य चतुर्थपादेन च तया तुरीयेणानुचिन्तयन्ग्रसेत्तस्य ह वा एतस्य प्रणवस्य या पूर्वा मात्रा सा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा प्रथमः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिर्द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः सा द्वितीयः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा

---

रार्थोऽनुष्टुप्तृतीयपादस्येश्वरार्थस्योभयतो भवति। या चतुर्थी मात्रा का सेत्यत आह—ओतानुज्ञात्रनुज्ञाविकल्परूपेति। तया तुरीयं पादमोतादिरूपैश्चतुरात्मानमन्विष्य संचिन्त्यानुष्टुप्चतुर्थपादेन च तमेव प्रतिपद्य पुनश्च तया पूर्वोक्ततुरीयमात्रया तुरीयमन्विष्य तुरीयतुरीयेण स्वात्मना तावन्मात्रेणैवमनुचिन्तयन्सर्वं जगद्ग्रसंद्विलापयेदित्यर्थः। अयं भावः। ओमितिचतूरूपेणाकारेण चतूरूपं विराजं प्रतिपद्य तमेवानुष्टुप्प्रथमपादेन स्फुटं संचिन्त्य पुनरप्योमित्युच्चरन्नकाररूपं तं स्मृत्वोमित्युच्चरन्हिरण्यगर्भं संचिन्त्य तत्र विराजं विलाप्यानुष्टुब्द्वितीयपादेनोकारेण च हिरण्यगर्भं भावयित्वा मकारेणाव्याकृतं संचिन्तयंस्तत्र हिरण्यगर्भं विलाप्यानुष्टुप्तृतीयपादेन मकारेण चाव्याकृतमेव चिन्तयित्वोमितिनादाकृत्योतादिरूपेण प्रणवेन तद्रूपं तुरीयं संचिन्त्य तत्राव्याकृतं विलाप्यानुष्टुप्चतुर्थपादेन च तमेव स्मृत्वा पुनरप्युक्तरूपेण बिन्द्वादिसहितेन प्रणवेन तमेव संचिन्तयन्स्वरूपस्थो भवेदिति। पुनरपि प्रकारान्तरेण मात्रापादमिश्रमेवोपासनमाह—तस्य ह वा एतस्येत्यादिना। का सा मात्रेत्याह—अकार इति। तस्योपासनाशेषत्वे विभूतिमाह। सा पृथिवी स ऋग्भिः स मन्त्रैः सहर्ग्वेदस्तद्व्याख्यानरूपं ब्राह्मणं स ब्रह्मा स वसव इत्येवं सर्वत्रान्वयः। सा मात्रा विराडर्था प्रथमः पादः स्ववाच्यविराड्रूपैव भवन्त्युभयोर्व्याप्त्यादिमत्त्वाच्चतूरूपत्वसाम्यात्। पृथिव्याद्यात्मकस्याकारस्य न केवलं विराज्येवावस्थानमपि त्ववशिष्टपादत्रयेऽपीत्याह—भवति च सर्वेषु पादेष्विति। तत्रोपपत्तिमाह—चतुरात्मेति। चतुरात्मत्वमुपपादयति—स्थूलेत्यादिना। विश्वादीनां स्थूला-

स्थूलसूक्ष्मबीजसाक्षिभिस्तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रादित्या जगत्याहवनीयः सा तृतीयः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिर्याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः सोऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकऋषिर्भास्वती स्मृता सा चतुर्थः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिर्मात्रा मात्राः प्रतिमात्राः कृत्वोतानुज्ञात्रनुज्ञाविकल्परूपं चिन्तयन्ग्रसेत ज्ञोऽमृतो

---

दिरूपचतुष्टयं समष्ट्यात्मनः स्थूलादिरूपेऽन्तर्भाव्यमित्यर्थः । एवमुत्तरपर्यायेष्वपि योज्यम् । याऽवसाने बीजात्मकाक्षरत्रयान्तेऽस्य प्रणवस्य चतुर्थी तुरीयाऽर्धमात्रा बिन्द्वादिरूपाऽर्धं मात्रापक्षस्यार्धममात्रापक्षस्येत्यर्धमात्रा, सा कारणं तुरीयं चानुगतेति ह्युक्तं पूर्वत्र कालतो वाऽर्धमात्रात्वं न स्वतः । सा सोमलोक उमया विद्यया सहितस्य परमेश्वरस्य लोकः सोमलोक इतरस्य द्युलोकैकदेशत्वेन पृथग्ग्रहणायोगात् । का सा मात्रेत्याह—ओंकार इति । बिन्द्वादीनां स्वयमनुच्चार्यत्वात्तेषां स्थाने पठितोऽयमोंकार एकऋषिर्नामाऽऽथर्वणिकानामग्निः सा च मात्रा भास्वती स्मृता बिन्द्वादिरूपत्वेन तुरीयबोधकत्वाच्च । एवं समष्टिव्यष्ट्यैक्यं संचिन्त्य मात्रापादमिश्रोपासनया पूर्ववत्सर्वं क्रमेणोत्तरोत्तरत्र संहृत्य स्वात्मन्यवस्थातव्यमित्याह—मात्रा मात्रा इत्यादिना । अथ सानुष्ठानक्रमन्यासार्चनादिसहितमुपासनमाह—ज्ञोऽमृत इत्यादिना । ज्ञोऽमृत इत्यादिनेहोपासनाक्रम उच्यते । अत उपासनापरस्य खण्डाष्टकस्यार्थो गुरूक्तक्रमेणैवान्तर्भाव्यः । ज्ञः सन्नमृतो भूत्वा हुतसंवित्कश्च सञ्शुद्धो भूत्वा संविष्टः सन्निर्विघ्नः सन्निममसुनियमेऽनुभूयेत्यादिक्रमेणान्वयो द्रष्टव्यो ज्ञोऽमृत इत्यादेः । तत्र प्रबोधसमये प्रबोधमन्त्रेण प्रणवेन वा निद्रासाक्षितयाऽनिद्रे ज्ञस्वरूपे स्वात्मन्यवस्थानं कर्तव्यमित्याह—ज्ञ इति । ॐ नित्यप्रबुद्धाय परमात्मने नम इति प्रबोधमन्त्रः । पुनरमृतमयमूर्तिम-

## हुतसंवित्कः शुद्धः संविष्टो निर्विघ्न इममसुनियमेऽनुभूयेहेदं सर्वं दृष्ट्वाऽसुप्रपञ्चहीनोऽथ सकलः

न्त्रेण प्रणवेनैव वा विद्यामयी परमात्मनो मूर्तिरात्मत्वेनानुसंधातव्येत्याह—अमृत इति । ॐ विद्यादेहाय परमात्मने नम इति मूर्तिमन्त्रः । पुनर्गतदिवसे कृतं तद्दिने करिष्यमाणं च ज्ञानक्रियात्मकं सर्वमपि व्यवहारजातं व्यवहारकाल एव संविन्मात्ररूपेणाऽऽलोचितं परिपूर्णसच्चिदानन्दरूपे परमेश्वरे तत्पूजाजपहोमतर्पणध्यानादिरूपेण समर्पणीयमित्याह—हुतसंवित्क इति । मन्त्रस्तु प्रणव एव । अथोत्थायाऽऽवश्यकशौचाचमनदन्तधावनमलस्नानविधिस्नानादिभिः शुद्धो भवेदित्याह—शुद्ध इति । पुनः कृतसंध्योपासनादिकर्तव्यस्य शुद्धे स्वासने समुपवेशः कर्तव्य इत्याह—संविष्ट इति । उपविष्टस्य गुर्वाद्यनुज्ञापूर्वकमस्त्रेणाङ्गुलिकरशोधनतालत्रयदिग्बन्धाग्निप्राकारवेष्टनैर्विघ्ननिरासः कर्तव्य इत्याह—निर्विघ्न इति । पुनरोमित्येतदक्षरमिदं सर्वमित्युक्तप्रणवव्याप्त्यनुसंधानानन्तरमकारादिव्यापकेनापरिच्छिन्नशरीरस्य हंस इति परमात्मनि रक्षितजीवस्य भूतं भवदित्यादावुक्तप्रकारेण रेचकपूरकाभ्यां संहृतसकलस्य कुम्भककाले स्वात्मानुभवः प्रणवेन कर्तव्य इत्याह—इममसुनियमेऽनुभूयेति । एवं शक्त्यनुसारेण प्राणायामं कृत्वा तमेतमात्मानमोमित्युक्तप्रकारेण व्यतिहारप्रतिपत्तिमनुज्ञाप्रणवेनाऽऽत्मानुसंधानं च कृत्वा प्रणवमकारादिव्यापकैरात्मनि शरीरचतुष्टयमुत्पादनीयमित्याह—इहेदं सर्वं दृष्ट्वेति । इह प्रत्यगात्मनीदं सर्वं जगच्छरीरचतुष्टयरूपं दृष्ट्वा सृष्ट्वा दृष्टिरेव हि सृष्टिरित्यर्थः । पुनस्तस्मिन्निदं सर्वं त्रिशरीरमित्युक्तप्रकारेण प्राणाग्निहोत्रप्रपञ्चयागकर्तव्यतामाह—असुप्रपञ्चहीन इति । ॐ ह्रीमिति चिदानन्दरूपं देवं संभाव्य क्षकाराद्यकारान्तां मातृकामुच्चरंस्तदात्मकं सर्वजगन्मयशरीरचतुष्टयं देवात्सच्चिदानन्दरूपादुत्पन्नं तन्मयं संभाव्य सोऽहं हंस इति जीवपरमात्मनोः परस्परमेकत्वं संभाव्य तस्मिन्नग्नौ स्वाहेति शरीरचतुष्टयं विलापयेदिति प्राणाग्निहोत्रसंग्रहः । प्रपञ्चयागोऽप्येवमेव कार्यं ॐ ह्रीमित्युक्त्वाऽकारादिक्षकारान्तामभिधाय । हंसः सोऽहं स्वाहेति तु तत्र मन्त्र इत्येव विशेषः । अथ तं वा एतं त्रिशरीरमित्युक्तक्रमेण सकलीकरणन्यासः कर्तव्य इत्याह—अथ सकल इति । ओमिति तमेतमात्मानमोमिति ब्रह्मणैकीकृत्येत्यादिना पादखण्डोक्तक्रमेण ब्रह्मात्मनोः परस्परमेकत्वं पुनरपि प्रतिपद्य तदेकमजरममृतमभयमोमित्यनुज्ञाप्रणवेनाभूय शरीरचतुष्टयसृष्ट्यर्थं वक्ष्यमाणैर्मन्त्रैः सकलीकरणं कुर्यादोमिति

## साधारोऽमृतमय-

शान्तान्तमुच्चार्य शान्त्यतीतकलात्मने साक्षिणे नम इति व्यापयन्साक्षिणं संचिन्त्य प्रणवं शक्त्यन्तमुच्चार्य शान्तिकलाशक्तिपरावागात्मने सामान्यदेहाय नम इति व्यापयन्नन्तर्मुखसदात्मकब्रह्मज्ञानरूपं सामान्यदेहं संचिन्त्य प्रणवं नादान्तमुच्चार्य विद्याकलानादपश्यन्तीवागात्मने कारणदेहाय नम इति व्यापयन्प्रलयसुषुप्तीक्षणावस्थं किंचिद्बहिर्मुखसदात्मकं कारणदेहं संचिन्त्य प्रणवं बिन्द्वन्तमुच्चार्य प्रतिष्ठाकलाबिन्दुमध्यमावागात्मने सूक्ष्मदेहाय नम इति व्यापयन्सूक्ष्मभूतान्तःकरणप्राणेन्द्रियरूपं सूक्ष्मशरीरं स्मृत्वा प्रणवमकारान्तमुच्चार्य निवृत्तिकलाबीजवैखरीवागात्मने स्थूलशरीराय नम इति व्यापयन्पञ्चीकृतभूततत्कार्यात्मकस्थूलशरीरं स्मरेदिति सकलीकरणन्याससंग्रहः । एवं सृष्टमिदं शरीरचतुष्टयं भगवतः सपरिकरासनमूर्तिरूपेण कल्पयता पीठमूर्तिन्यासौ कल्पयितव्यावित्याह—साधारोऽमृतमय इति । आधारेण पीठेन तदाधारेण च स्थानादिना सह वर्तत इति सपरिकरपीठन्यासोऽनेन सूचितः । अमृतमय इति मूर्तिन्यासः । अमृतमनृतजडदुःखपरिच्छेदादिविरुद्धं सच्चिदानन्दानन्तात्मपदलक्ष्यं ब्रह्म तन्मयोऽन्तर्मुखसदात्मनि ब्रह्मज्ञानेन प्रतिबिम्बितानि यान्यनृतादिविरुद्धानि रूपाणि सच्चिदानन्दपूर्णात्मपदानां वाच्यार्थरूपाणीच्छाज्ञानक्रियास्वातन्त्र्यतच्छक्तीनां कारणानि तन्मय इत्यर्थः । एवं सति सच्चिदानन्दपूर्णात्मरूपिणीच्छाज्ञानक्रियास्वातन्त्र्यसद्रूपिणी च परा शक्तिर्भगवतो मूर्तिरित्युक्तं भवति । पीठादिकल्पनाप्रकारस्तूच्यते । ॐ चतुरशीतिकोटिप्राणिजात्यात्मने ब्रह्मवनाय नम इति व्यापयन्केशरोमादिकं वनत्वेन कल्पयेत् । ॐ पञ्चभूतनामरूपात्मकेभ्यः प्राकारेभ्यो नम इति व्यापयन्पञ्चीकृतपञ्चभूतनामरूपात्मकान्सप्तधातून्सप्तप्राकारत्वेन कल्पयेत् । ॐ नवच्छिद्रात्मभ्यो नवद्वारेभ्यो नम इति व्यापयन्प्रतिप्राकारं गोपुरनवकत्वेन नव द्वाराणि कल्पयेत् । एवं स्थूलशरीरं स्थानत्वेन परिकल्प्य सूक्ष्मशरीरं महाराजराजेश्वरस्याऽऽत्मनः परिचारकत्वेन कल्पयेत् । तथाहि—संविद्रूपेभ्यो राजराजेश्वरद्वारेभ्यो नमः । सकामाकामवृत्तिभ्यो द्वारदेवताभ्यो नमः । कामवैराग्याभ्यां द्वारपालाभ्यां नमः । दिगन्याद्यात्मकश्रोत्रादीन्द्रियरूपिभ्यो राजपरिचारकेभ्यो नमः । चन्द्रात्मकाय मनसे राजदूताय नमः । ब्रह्मरूपिण्यै सर्वकार्यनिश्चयकर्त्र्यै बुद्ध्यै नमः । रुद्ररूपाय सर्वकार्याभिमानकर्त्रेऽहंकाराय नमः । विष्णुरूपाय सर्वकार्यानुसंधानकर्त्रे चित्ताय नमः । सर्वेश्वररूपाय सर्वाधिकारिणे प्राणाय नम इति न्यसञ्जपन्स्मरन्वा सूक्ष्मशरीरं भगवत उपकरणं विधाय गुणत्रयात्मने प्रासादाय नम इति

# चतुरात्मा सर्वमय-

प्रासादं संकल्प्य प्रणवं बिन्द्वन्तमुच्चार्य परमात्मासनाय नम इति हृदये विन्यस्य किंचिद्बहिर्मुखं पूर्वोक्तं सदात्मानं कारणशरीरं गुणसाम्यरूपं पीठत्वेन कल्पयेत्ततः प्रणवं शक्त्यन्तमुच्चार्य परमात्ममूर्तये नम इति हृदयादिमस्तकान्तं व्यापयन्पूर्वोक्तसामान्यशरीरमन्तर्मुखं सदाद्यात्मकं ब्रह्म ज्ञानपराशक्तिरूपिणीं शङ्खचक्रगदाज्ञानमुद्रालसत्करचतुष्टयां सर्वालंकारविशिष्टां 'स्वात्मानन्दानुभवसागरमग्नां भगवतो मूर्तिं संचिन्तयेदिति पीठमूर्तिन्यासः। पीठमूर्तिमन्त्रद्वयमेवात्रावश्यं न्यस्तव्यमवशिष्टं तु कल्पनीयम्। अथैवंभूतमूर्तिव्यापकस्य तत्साक्षिणः कूटस्थस्य परमेश्वरस्य परमात्मनो मूर्तिमतो मूर्तावावाहनमाभासद्वारेण तद्व्यापकत्वचिन्तनं कर्तव्यमित्याह—चतुरात्मेति। चतुर्णां सामान्यादिशरीराणामात्मा भवेदित्यर्थः। चतुरात्मेत्यनेनैव प्रणवेन समस्तव्यस्तेन कराङ्गुलिन्यासौ कनिष्ठाद्यङ्गुलिष्वङ्गन्यासः समस्तेन देहे त्रिशो व्यापकन्यासः समस्तस्य प्रणवस्य मूलाधारे न्यासो व्यस्तस्य नाभिहृदयभ्रूमध्येषु समस्तस्य द्वादशान्तषोडशान्तयोश्च न्यासः सूचितः। तथाहि। चत्वारोऽकारोकारमकारोंकारा आत्मानो यस्य स चतुरात्मा तथाविधो भूत्वेति ह्यस्यार्थः। चत्वारो व्याहृत्यग्न्यादयः सभ्या आत्मानो यस्येत्यङ्गन्याससूचनप्रकारः। अथ पादमात्राखण्डयोः सूचितः पादन्यासः कर्तव्य इत्याह—सर्वमय इति। सर्वशब्देन सर्वात्मकं विराडादिपादचतुष्टयमुच्यते तन्न्यासेन तन्मय इत्यर्थः। ऐश्वर्यशक्त्यात्मने द्युलोकाय नमः। ज्ञानशक्त्यात्मने सूर्याय नमः। संहारशक्त्यात्मनेऽग्नये नमः। क्रियाशक्त्यात्मने वायवे नमः। सर्वाश्रयशक्त्यात्मन आकाशाय नमः। इच्छाशक्त्यात्मने प्रजापतये नमः। सर्वाधारशक्त्यात्मने पृथिव्यै नम इति मूर्धाक्षिवदनघ्राणात्मगुह्यपादेषु सप्ताङ्गन्यासः। पुनरेकोनविंशतिमुखेषु तन्न्यासः। तत्र समानादिन्यासे चित्तश्रोत्रवागादिन्यासे च तत्तच्छक्त्यात्मने नम इति योज्यम्। शक्तिमात्ररूपं हि भगवतः शरीरमितरत्तु स्थानप्राकारपरिचारकादिरूपेण क्लृप्तम्। उक्तं च—देवात्मशक्तिं स्वगुणैर्निगूढां न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते, परेशस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति। अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः, अपाणिपादो जवनो ग्रहीतेति च, मन्त्रास्त्वेवं प्रयोक्तव्याः। प्रणयनशक्त्यात्मने प्राणायापनयनशक्त्यात्मने व्यानयनशक्त्यात्मन उन्नयनश-

---

१ ट. सत्ता।

क्त्यात्मने समनयनशक्त्यात्मनेऽनुसंधानशक्त्यात्मने तथा निश्चयाहंकारसंकल्पश्रवणस्पर्शनदर्शनरसनघ्राणवचनादानगमनविसर्गानन्दशक्त्यात्मन इत्यादिरूपेण । इति पादन्यासं कृत्वा वक्ष्यमाणं मन्त्रपञ्चकं व्यापकत्वेन विन्यस्य पादचतुष्टयं ध्यायेत् । ॐ उग्रं वीरं महाविष्णुं जागरितस्थानाय स्थूलप्रज्ञाय सप्ताङ्गायैकोनविंशतिमुखाय स्थूलभुजे चतुरात्मने विश्वाय वैश्वानराय पृथिव्यग्न्यृग्वेदब्रह्मवसुगायत्रीगार्हपत्याकारात्मने स्थूलसूक्ष्मबीजसाक्ष्यात्मने प्रथमपादात्मने नमः । ॐ ज्वलन्तं सर्वतोमुखं स्वप्नस्थानाय सूक्ष्मप्रज्ञाय सप्ताङ्गायैकोनविंशतिमुखाय सूक्ष्मभुजे चतुरात्मने तैजसाय हिरण्यगर्भायान्तरिक्षयजुर्वेदविष्णुरुद्रत्रिष्टुब्दक्षिणाग्न्युकारात्मने स्थूलसूक्ष्मबीजसाक्ष्यात्मने द्वितीयपादाय नमः । ॐ नृसिंहं भीषणं भद्रं सुषुप्तस्थानायैकीभूताय प्रज्ञानघनायाऽऽनन्दमयायात्यानन्दभुजे चेतोमुखाय चतुरात्मने प्राज्ञायेश्वराय द्युसामवेदरुद्रादित्यजगत्याहवनीयमकारात्मने स्थूलसूक्ष्मबीजसाक्ष्यात्मने तृतीयपादाय नमः । ॐ मृत्युमृत्युं नमाम्यहं सर्वेश्वराय सर्वज्ञाय सर्वशक्तये सर्वान्तर्यामिणे सर्वात्मने सर्वयोनये सर्वप्रभवाय सर्वाप्ययाय सोमलोकाथर्ववेदसंवर्तकाग्निमरुद्विराडेकर्ष्योंकारात्मने स्थूलसूक्ष्मबीजसाक्ष्यात्मने चतुर्थपादाय नमः । ॐ मन्त्रराजान्ते नान्तःप्रज्ञायाबहिष्प्रज्ञायानुभयप्रज्ञायाप्रज्ञाय नाप्रज्ञायाप्रज्ञानघनायादृष्टायाव्यवहार्यायाग्राह्यायालक्षणायाचिन्त्यायाव्यपदेश्यायैकात्म्यप्रत्ययसारायामात्राय प्रपञ्चोपशमाय शिवाय शान्तायाद्वैताय सर्वसंहारसमर्थाय परिभवासहाय प्रभवे व्याप्ताय सदोज्ज्वलायाविद्याकार्यहीनाय स्वात्मबन्धहराय सर्वदा द्वैतरहितायानन्तरूपाय सर्वाधिष्ठानसन्मात्राय निरस्ताविद्यातमोमोहायाकृत्रिमाहंविमर्शायोंकाराय तुरीयतुरीयाय नम इति पुनः प्रणवेन सकृद्व्याप्याङ्गन्यासमाचरेत् । ॐ उग्रं वीरं महाविष्णुं पृथिव्यृग्वेदब्रह्मवसुगायत्रीगार्हपत्याकारभूरग्न्यात्मने सर्वज्ञानशक्त्यात्मने हृदयाय नमः । ॐ ज्वलन्तं सर्वतोमुखमन्तरिक्षयजुर्वेदविष्णुरुद्रात्रिष्टुब्दक्षिणाग्न्युकारभुवःप्रजापत्यात्मने नित्यतृप्त्यैश्वर्यशक्त्यात्मने शिरसे स्वाहा । ॐ नृसिंहं भीषणं भद्रं द्युसामवेदरुद्रादित्यजगत्याहवनीयमकारस्वःसूर्यात्मनेऽनादिबोधशक्त्यात्मने शिखायै वषट् । ॐ मृत्युमृत्युं नमाम्यहं सोमलोकाथर्ववेदसंवर्तकाग्निमरुद्विराडेकर्ष्योंकारभूर्भुवःस्वर्ब्रह्मात्मने स्वातन्त्र्यबलशक्त्यात्मने कवचाय हुम् । ॐ ओंकारभास्वत्यलुप्त[illegible]त्मने नेत्रत्रयाय वौषट् । ॐ मन्त्रराजान्ते पृथिव्यकारर्ग्वेदब्रह्मवसुगायत्रीगार्हपत्यान्तरिक्षोकारयजुर्वेदविष्णुरुद्रत्रिष्टुब्दक्षिणाग्निद्युमकारसामवेदरुद्रादित्यजगत्याहवनीयसोमलोकोंकाराथर्ववेदसंवर्तकाग्निमरुद्वि-

**श्चतुरात्माऽथ महापीठे सपरिवारं तमेतं चतुः-
सप्तात्मानं चतुरात्मानं मूलाग्नावग्निरूपं प्रणवं**

---

राद्येकर्षिभास्वतीसत्यात्मनेऽनन्ततेजःशक्त्यात्मनेऽस्त्राय फडित्येतान्यङ्गानि । पुनर्ऋष्यादिकं विन्यस्य बीजादिकं स्मृत्वा देवं ध्यात्वा परमानन्दामृतेन चतुर्मूर्त्यात्मभूताया देवतायाः पूजा कर्तव्येत्याह—चतुरात्मेति । मूर्तिचतुष्टयव्यापकं तत्साक्षिणं परमानन्दबोधाब्धिं ध्यात्वा मूर्तिचतुष्टयं तत्र मग्नं भावयेत् । इयमेवाऽऽत्मपूजा । पुनस्तस्य ह वै प्रणवस्य या पूर्वा मात्रा सा प्रथमपादोभयतो भवतीत्यादिवाक्यैरस्मिन्नेव क्रमखण्डे कथितमुपासनं विधायाऽऽत्मैव चतुर्मूर्तिरूपेण पृथक्पूजनीय इति पीठादिकल्पनापूर्वकमाह—अथ महापीठ इत्यादिना । अथाऽऽत्मपूजानन्तरम् । महापीठे बहिर्मुखसदात्मके गुणबीजरूपे मूलाधारस्थद्वात्रिंशदष्टचतुर्दलपद्माकारे । सपरिवारं द्वात्रिंशद्दलगतैः पृथिव्यन्तरिक्षद्युसोमलोकाद्यष्टकरूपैरष्टदलगतैः सच्चिदानन्दपूर्णात्माद्वयप्रकाशविमर्शरूपैश्चतुर्दलगतब्रह्मसर्वेश्वरविष्णुसर्वेश्वररुद्रसर्वेश्वरसर्वेश्वरेश्वरपरिवारैः सहितमित्यर्थः । तं पादमात्राखण्डयोरुक्तमेतमिह पृथिव्यकार इत्यादिना कथितं चतुःसप्तात्मानमकारादिसंबन्धित्वेनोक्तपृथिव्यादिचतुर्विधसप्तकरूपमकारादिसमष्टिरूपत्वादोंकारस्य सर्वत्र मन्त्रब्राह्मणयोरैक्यं विवक्षित्वा चतुःसप्तात्मानमित्युक्तम् । अकारादिभिर्विभूतिमद्भिर्वा विना स्वतश्चतुरष्टधात्मानमित्येवार्थः । अनेन च व्यष्टिदेवानां सर्वेषामविशेषेण समष्टिदेवतयैकत्वमुक्तम् । तदंशमूर्तिचतुष्टयस्य विशेषेणैकत्वमाह—चतुरात्मानमिति । समष्टिव्यष्टिस्थूलादिभिश्चतुरात्मानमित्यर्थः । यद्यपीह सप्तात्मानं चतुरात्मानमिति तुरीयं मात्रासंबन्धस्य सप्तकस्य तदंशरूपस्थूलादिचतुष्टयस्य तुरीयप्रणवेन विशेषसंबन्धप्रतिपत्तये वक्तव्यमपि नोक्तं तथाऽपि तस्योत्तरत्र तुरीयप्रणवसंबन्धित्वेन कथनादिहापि तत्कथितमेवेत्यवगन्तव्यम् । मूलाधारस्थस्यापि प्रणवस्य तुरीयप्रणवरूपत्वात्तत एव ह्यत्रापि मध्येऽष्टदलं पद्ममुपदिशन्त्याचार्याः । द्वादशान्तषोडशान्तयोरिव मूलाग्नौ मूलाधारगताग्नावग्निमण्डलेऽग्निरूपं चित्प्रकाशरूपं क्रियाशक्तिजाठरेण संपृक्तं प्रणवं संचिन्तयेत् । अग्निरूपमित्युक्तत्वात्सपरिवारस्योंकारस्यात्र शिरःपाण्यादिविशिष्टो विग्रहो न कल्पनीयः किंतु प्रलयानलार्कसमज्योतिर्मात्ररूप एव चिन्तनीय इति गम्यते । अथ मूलाधारस्थमग्निं नाभ्यन्तरमुन्नीय तस्मिन्नग्नावनुष्टुप्प्रथमपा-

---

१ ट. 'र्वम' । २ ट. 'रीयमा' । ३ ट. 'मादिश' ।

संदध्यात्सप्तात्मानं चतुरात्मानमकारं ब्रह्माणं नाभौ सप्तात्मानं चतुरात्मानमुकारं विष्णुं हृदये सप्तात्मानं चतुरात्मानं मकारं रुद्रं भ्रूमध्ये सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमोंकारं सर्वेश्वरं द्वादशान्ते । सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमानन्दामृत-

दस्याष्टाक्षररूपमष्टदलं पद्मं संचिन्त्य तत्कर्णिकायां प्रणवस्थाकारबीजबिन्दुनादशक्तिभिश्चतुरात्मकं चतुर्दलपद्मरूपं संचिन्त्य तत्कर्णिकायां सरस्वतीमूलप्रकृतिसहितो ब्रह्मसर्वेश्वरो ध्येय इत्याह—सप्तात्मानमित्यादिना । अत्रापि सपरिवारमित्यनुषज्यते । तथोत्तरवाक्येष्वपि । अत्राष्टदलेऽकारसंबन्धित्वेन कथितपृथिव्याद्यष्टकरूपानुष्टुप्प्रथमपादाक्षरस्थाः साङ्गोपाङ्गवेदाश्चतुर्दलस्थब्रह्मब्रह्मब्रह्मविष्णुब्रह्मरुद्रब्रह्मसर्वेश्वराश्च परिवारत्वेन ध्येयाः । तत्राष्टदले दिक्षु वेदाः स्मर्तव्याः । अग्निकोणे षडङ्गानि निर्ऋतिकोणे मीमांसा वायव्यकोणे न्याय ईशानकोण इतिहासपुराणागमकाव्यनाटकादयः । चतुर्दलेऽग्रतो ब्रह्मसर्वेश्वरो दक्षिणतो ब्रह्मरुद्र उत्तरतो ब्रह्मविष्णुः पश्चिमतो ब्रह्मब्रह्मा । एवमुत्तरत्रापि मूर्तिचतुष्टयस्थितिरवगन्तव्या। सप्तात्मानं चतुरात्मानमकारं ब्रह्माणं नाभाविति मध्ये ब्रह्मसर्वेश्वरक्लृप्तिरुक्ता सप्तात्मानमकारसंबन्धित्वेनोक्तं सप्तात्मानमकारेण सहाष्टात्मानमित्यर्थः । अन्यथाऽनुष्टुबक्षरसंबन्धायोगादिति । व्यष्टिसमष्ट्योः सामान्येनैकत्वमभिधाय तदंशानां स्थूलादीनामप्येकत्वमाह—चतुरात्मानमिति। अकारं प्रणवस्थाकारात्मकं रजःप्रधानं सोममण्डलस्थं ब्रह्माणं ब्रह्मसर्वेश्वरं सरस्वतीमूलप्रकृतिसहितं नाभौ तेजोमध्येऽष्टदलस्थचतुर्दलकर्णिकायां संदध्यादित्यर्थः । तथा सप्तात्मानमुकारसंबन्धित्वेनोक्तान्तरिक्षादिसप्तकरूपमुकारेण सहाष्टरूपं चतुरात्मानं स्थूलादिभिरुकाररूपं विष्णुसर्वेश्वरं श्रीमूलप्रकृतिसहितं सत्त्वप्रधानं सूर्यमण्डलस्थं स्वहृदयेऽष्टदल उकारसंबन्धित्वेनोक्तान्तरिक्षाद्यात्मकानुष्टुब्द्वितीयपादाक्षरस्थवाराहनरसिंहवामनपरशुरामराघवबलभद्रकृष्णकल्किमूर्तिभिरधिष्ठितेन(?) तन्मध्यस्थोकाररूपं चतुर्दलपद्मगतविष्णुसर्वेश्वरादियुतेऽनुसंदध्यात् । तथा सप्तात्मानं मकारसंबन्धितयोक्तं द्युलोकाद्यष्टकरूपं तथा चतुरात्मानं मकाररूपं रुद्रसर्वेश्वरमुमामूलप्रकृतिसहितं तमःप्रधानमग्निमण्डलस्थं

१ क. ग. घ. छ. °न्दात्मामलरूपं प्रणवं पो° ।

रूपमोंकारं षोडशान्ते । अथाऽऽनन्दामृतेनैतांश्चतुर्धा संपूज्य

भ्रूमध्येऽष्टदले मकारसंबन्धित्वेनोक्तद्युलोकाद्यात्मकानुष्टुप्तृतीयपादाक्षरस्थशर्वभवपशुपतीशानभीममहादेवरुद्रोग्रमूर्तिभिरधिष्ठितेन(?) तन्मध्यस्थं मकाररूपं पद्मचतुर्दलगतरुद्रसर्वेश्वरादियुतेऽनुसंदध्यात् । तथा सप्तात्मानं मकारसंबन्धिमात्रासंबन्धित्वेनोक्तैः सोमलोकाद्यैरष्टात्मानमित्यर्थः । तथा चतुरात्मानं तत्संबन्धस्थूलादिभिस्तथा चतुःसप्तात्मानं मात्राचतुष्टयसंबन्धित्वेनोक्ताष्टकचतुष्टयेन चतुरष्टात्मानं तथा चतुरात्मानं तत्संबन्धस्थूलादिभिरोंकारं तुरीयप्रणवरूपं सर्वेश्वरं गुणसाम्योपाधिशक्तिमण्डलस्थं मूलप्रकृतिमायासहितं द्वादशान्ते द्वात्रिंशद्दलपद्मे मूलाधारस्थद्वात्रिंशद्दलोक्तदेवताविशिष्टे तद्गताष्टदलस्थसदादिमूर्तियुते तत्कर्णिकागतचतुर्दलस्थसर्वेश्वरचतुष्टयसंयुक्तेऽनुसंदध्यात् । तथा सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमोंकारं तुरीयमानन्दामृतरूपं गुणबीजोपाधिं शक्तिमण्डलस्थं षोडशान्तेऽधोमुखद्वात्रिंशदष्टदलचतुर्दलपद्मैः पूर्वोक्तदेवतादिभिश्च विशिष्टेऽनुसंदध्यात् । अथोक्तमूर्तिचतुष्टयपूजा कार्येत्याह—अथेत्यादिना । अथ पीठमूर्तिकल्पनानन्तरमानन्दामृतेन पूर्वोक्तेनैतान्ब्रह्मादिसर्वेश्वरान्सपरिवारांश्चतुर्धा चतुष्प्रकारेण देवतागुरुमन्त्रात्मप्रकारेण । अथवा चतुर्धेति पूजासाधनानां जलगन्धपुष्पादिधूपदीपनैवेद्यादीनामानन्दरूपाणां स्थूलादिरूपेण पूज्यदेवतावच्चतुरात्मत्वमुक्तं देवताद्रव्ययोः संबन्धयोग्यत्वप्रदर्शनाय । पूजामन्त्रास्त्वेवं प्रयोक्तव्याः—ॐ अमुग्रं वीरं महाविष्णुं अं ॐ रजउपाधये स्थूलविराट्शरीराय विश्ववैश्वानरात्मने सर्वस्रष्ट्रे ब्रह्मणे सरस्वतीसहिताय सर्वज्ञाय सदात्मनेऽसङ्गाखण्डसंविदे नारायणाय नरसिंहाय परमात्मने सपरिवाराय मनः । ॐ उं ज्वलन्तं सर्वतोमुखं उं ॐ सत्त्वोपाधये सूक्ष्महिरण्यगर्भशरीराय तैजससूत्रात्मने सर्वपालकाय विष्णवे लक्ष्मीसहिताय सर्वज्ञायाऽऽनन्दात्मनेऽसङ्गाद्वयसंविदे नारायणाय नरसिंहाय परमात्मने सपरिवाराय नमः । ॐ मं नृसिंहं भीषणं भद्रं मं ॐ तमउपाधये सौषुप्तप्राज्ञशरीराय प्राज्ञेश्वरात्मने सर्वसंहर्त्रे सदाशिवायोमासहिताय सर्वज्ञाय सच्चिदानन्दात्मनेऽसङ्गाखण्डाद्वयापरोक्षसंविदे नारायणाय नृसिंहाय परमात्मने सपरिवाराय नमः । ॐ ॐ मृत्युमृत्युं नमाम्यहं ॐ ॐ गुणसाम्योपाधये व्याकृताव्याकृतशरीराय प्रत्यग्ब्रह्मात्मने सर्वोत्पत्तिस्थितिसंहारकर्त्रे सर्वेश्वराय मूलप्रकृतिमायासहिताय सर्वज्ञाय सदानन्दचिदात्मनेऽसङ्गाखण्डाद्वयापरोक्षसंविदे नारायणाय नरसिंहाय परमात्मने सपरिवाराय नमः । ॐ समस्तनिरंविद्येगु-

१ ग छ. अथ स्वान' । २ ञ. 'रवद' । ३ ट. 'यानिर्गुणा' ।

णायाशरीरायासङ्गप्रत्यगद्वयाय स्वभासावभासितकृत्स्नायासङ्गबोधायासङ्गाखण्डाद्वयापरोक्षसदानन्दचिदात्मने स्वप्रबोधध्वस्तानर्थद्वैताय निरालम्बनबिम्बायाहीनमहोदयाय नारायणाय नृसिंहाय परमात्मने सपरिवाराय नम इति । ॐ ह्रीं श्रीं स्त्रौं ईं नमः संसिद्धसमृद्धिदाप्रमेयपरमैकरस्यायै परमहंसिन्यै समस्तजनवाङ्मनसावर्तिन्यै निरन्तरारम्भस्तिमितनिरञ्जनपरमानन्दसंदोहमहार्णवस्वरूपपरम्परायै विष्णुपत्न्यै विष्णवे हं ह्रीं ॐ स्वाहा नम इति देवस्य सूक्ष्मदेहे ब्रह्मज्ञानात्मके पुष्पाञ्जलिं कुर्याद्वक्ष्यमाणमन्त्रपञ्चकेन च। ॐ ह्रीं श्रीं स्त्रौं ईं नमो निरन्तरप्रथमानपरमसामरस्यायै स्वस्वातन्त्र्यसमुन्मिषितनिमेषोन्मेषपरम्परारम्भे स्वच्छस्वच्छन्दस्पन्दमानविज्ञानवारिनिधये परमसूक्ष्मायै विष्णुपत्न्यै विष्णवे महामायायै हं सां ईं ॐ स्वाहा नमः । ॐ ह्रीं श्रीं स्त्रौं । ईं नमः स्वसंकल्पबलसमुन्मूलितभगवद्व्याप्तिभावस्वभावे स्वेच्छावेशविजृम्भमाणासत्ताविभक्तिमूर्तिकरचतुरगुणगणग्रामयुतत्रिमहोर्मिज्वालायै पूर्णषाड्गुण्यमहाछायायै परमस्थूलायै विष्णुपत्न्यै विष्णवे मायायै पञ्चबिन्दवे हं ईं ॐ स्वाहा नमः । ॐ ह्रीं श्रीं क्षौं ह्रीं ह्रीं ह्रीः नमो नित्योदितमुदितमहानन्दपरम[1]सुन्दरभगवद्विग्रहप्रकाशे विविधसिद्धजनास्पदषाड्गुण्यप्रसरमयपरमसत्त्वरूपपरमव्योमस्वभावायै विचित्रानन्तनिर्मलसुन्दरभोगजालप्रकारपरिणामप्रवीणस्वभावायै परमसूक्ष्मस्थूलरूपसूक्ष्मायै विष्णुपत्न्यै विष्णवे महामायायै पञ्चबिन्दवे[2] हं हीं हीं हीं ॐ स्वाहा नमः । ॐ ह्रीं श्रीं श्रीं क्ष्रौं ह्रीं नमः स्वसंकल्पसमीरणसमीर्यमाणबहुविधजीवकोशविसृष्टपुञ्जायै कल्पितकालकल्पनिककल्पभेदेन पिण्डनिवहायै लीलासंदर्शितभोक्तृभोग्यभोगोपकरणभोगसंपदैकमहासिन्धवे सूक्ष्मस्थूलरूप[3]स्थूलायै विष्णुपत्न्यै विष्णवे महामायायै पञ्चबिन्दवे हं हीं[4] हीं हीः ॐ स्वाहा नमः । ॐ ह्रीं श्रीं क्ष्रौं ह्रां ह्रीः नमः समस्तजगदुपकारस्वीकृतबुद्धिमनोज्ञप्रत्यङ्गसुन्दरायै द्विधाचतुष्टयमु(?)न्मेपितसमस्तजनलक्ष्मीकीर्तिजयमायाप्रभवात्मकसमस्तसंपदैकनिधये समस्तचक्रसूत्रधारायै समस्तजगत्संभोगसौभाग्यदायिनि विविधविषयोपप्लवशमनि नारायणाङ्कस्थितायै ॐ श्रीं ह्रीं क्ष्रौं ह्रीं ह्रीः नमो नारायणाय नरसिंहाय लक्ष्मीनारायणाभ्यां स्वाहा[5] ॐ श्रीं ह्रीं श्रीम् । अथ नैवेद्यानन्तरं पूजनादिभी राजोपचारादिभिश्च संपूज्य भगवन्तमतिप्रसन्नं संचिन्त्याधिकारिखण्डे वक्ष्यमाणेन क्रमेण मन्त्रराजमाश्रित्य नमस्कारखण्डे वक्ष्यमाणक्रमेण मन्त्रराजेन नृसिंहपदेन च ब्रह्मात्मैकत्वं प्रतिपद्य क्रमेण प्रणवनिष्ठां प्राप्य संधानखण्डे वक्ष्यमाणप्रकारेण ब्रह्मै-

---

१ म. °मभ° । २ ट. °वे हीं । ३ ट. °पस्थायै । ४ ट. हीं हीः । ५ ट. °हा श्रीं ।

कत्वं प्रतिपद्य व्यतिहारखण्डे वक्ष्यमाणप्रकारेण व्यतिहृत्यापि ब्रह्मात्मत्वं संचिन्त्यानुज्ञाप्रणवमाश्रित्य द्वादशसाहस्रसंख्यं त्रयस्त्रिंशाधिकत्रिशद्युतं त्रिसहस्रवारमष्टोत्तरसहस्रसंख्यं त्रयस्त्रिंशाधिकत्रिशतवारमष्टोत्तरशतसंख्यं त्रयस्त्रिंशद्वारं दशत्रिवारमेकवारं वा शक्त्यनुसारेण जप्त्वा जपं देवाय समर्प्य वक्ष्यमाणमन्त्रत्रयेण पुष्पाञ्जलिं कुर्यात् । ॐ अं हंसात्मको[1] योऽपामग्रेस्तेजसा दीप्यमानः स नो मृत्योस्त्रायतां नमो ब्रह्मणे विश्वनाभिः । ॐ नमो भगवते नृसिंहायाऽऽत्मने ब्रह्मणे व्याप्ततमाकाराय सर्वसाक्षिणे परमेश्वराय सर्वगतायाद्वयाय व्याप्ततमाय मायिने तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ॐ अं उग्रं हः अं वीरं हं अं महाविष्णुं हः अं ज्वलन्तं हः अं सर्वतोमुखं हः अं नृसिंहं हः अं भीषणं हः अं भद्रं हः अं मृत्युमृत्युं हः अं नमामि हः अं अहं हः ॐ तत्सन्नमो ब्रह्मणे तत्सत् । ॐ नमो नमोऽजरायामरायामृतायाभयायाशोकायामोहायानशनायापिपासायाद्वैताय । ॐ ह्रीं सं हः सोऽहं स्वाहा हंस सर्वप्रकाशकाकृत्रिमापूर्णाहमकाराय सर्वाय सर्वान्तराय सर्वात्मनेऽद्वयायामकाशमकाशाय । ॐ नमो ब्रह्मण ॐ नमः संहर्त्रे सततमहिम्ने । अं हं[2] उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् । अं नम इत्यनेनाकारमन्त्रेण देवस्य वामबाहुमूले विचित्रमन्त्ररचितां विचित्रां मालां प्रयच्छेत् । ॐ उं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् । ॐ नमो भगवते नृसिंहायाऽऽत्मने ब्रह्मणे विष्णवे सर्वोत्कृष्टतमोंकाराय परमार्थसत्यस्वरूपाय स्वप्रकाशायासङ्गायानन्यदर्शिनेऽद्वयायोत्कृष्टाय नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् । ॐ उं उग्रं हुः ॐ उं वीरं हुः ॐ उं महाविष्णुं हुः ॐ उं ज्वलन्तं हुः ॐ उं सर्वतोमुखं हुः ॐ उं नृसिंहं हुः ॐ उं भीषणं हुः ॐ उं भद्रं हुः ॐ उं मृत्युमृत्युं हुः ॐ उं नमामि हुः ॐ उं अहं हुः । ॐ नमो भगवते वासुदेवाय । ॐ नम उत्कृष्टायोत्पादकायोत्प्रवेष्ट्र उदुत्थापयित्र उद्द्रष्ट्र उत्कर्त्रे उदुत्पथवारकायोदुद्भासकायोदुद्भ्रान्तायोदुदुत्तीर्णविकृतये । ॐ नमो नारायणाय सर्वनिर्णायकाकृत्रिमपूर्णोन्मेषोकाराय । ॐ नमो विष्णव उं नमः सर्वविचिकित्सानिरासपूर्णोन्मेषमहिम्ने हरिः(?) । ॐ उं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं नृसिंहं भीषणं भद्रं मृत्यूमुत्युं नमाम्यहम् । ॐ नम इत्यनेन भगवतः कण्ठ आपादलम्बिनीं मालां दद्यात् । ॐ मं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव

१ ट. °कोऽपा° । २ ट. अहं ।

बन्धनान्मृत्योर्मुक्षीय मामृतात् । ॐ नमो भगवते नृसिंहायाऽऽत्मने परब्रह्मणे देवाय रुद्राय महाविभूतिमकाराय महात्मने भिन्नरूपाय स्वप्रकाशाय प्रत्यग्ब्रह्मणे व्याप्ततमायोत्कृष्टतमाय सर्वप्रत्यक्तमाय सर्वज्ञाय महामायाविभूतये तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । ॐ मं उग्रं हुं मं वीरं हुं मं महाविष्णुं हुं मं ज्वलन्तं हुं मं सर्वतोमुखं हुं मं नृसिंहं हुं मं भीषणं हुं मं भद्रं हुं मं मृत्युमृत्युं हुं मं नमामि हुं मं अहं हुं मं ॐ ह्रीं ह्रौं नमः शिवाय हंसः सोऽहं मं ॐ महते महसे मानाय मुक्ताय महादेवाय महेश्वराय महासते महाचिते महानन्दाय महाप्रभव ॐ ह्रीं ह्रौं नमः शिवाय मं सर्वमहत्तमं ब्रह्ममहत्तम मकाराय सर्वजगन्मयाय सच्चिदानन्दरूपाय वाङ्मनोगोचरातिगायाऽऽनन्दानुभवस्वरूपायाऽऽत्मप्रकाशाय । ॐ नमः शिवाय मं नमः सर्वमनोद्रष्ट्रे सर्वनिर्वाहकाय सर्वप्रत्यूहकाय सर्वसंपीडकाय सर्वसंज्वालकाय सर्वभक्षकाय स्वात्मस्वरूपदात्रेऽत्युग्रायातिवीरायातिमहतेऽतिविष्णवेऽतिज्वलतेऽतिसर्वतोमुखायातिनृसिंहायातिभीषणायातिभद्रायातिमृत्युमृत्यवेऽतिनमाम्यत्यहंकाराय स्वमहिमस्थाय हरः(?)। मं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् । मं ॐ नम इत्यनेन मन्त्रेण दक्षिणबाहुमूले मालां प्रयच्छेत् । एवं पुष्पाञ्जलित्रयं कृत्वा । ॐ उग्रं० इति नमस्कारखण्डे वक्ष्यमाणेन मन्त्रेण स्तुतिनमस्कारौ कृत्वा । ॐ उग्रमात्मानं नृसिंहमहं नमामि । ॐ वीरमात्मानं नृसिंहमहं नमामि । ॐ महाविष्णुमात्मानं नृसिंहमहं नमामि । ॐ ज्वलन्तमात्मानं नृसिंहमहं नमामि । ॐ सर्वतोमुखमात्मानं नृसिंहमहं नमामि । ॐ नृसिंहमात्मानं नृसिंहमहं नमामि । ॐ भीषणमात्मानं नृसिंहमहं नमामि । ॐ भद्रमात्मानं नृसिंहमहं नमामि । ॐ मृत्युमृत्युमात्मानं नृसिंहमहं नमामि । ॐ सर्वनमस्कार्यमात्मानं नृसिंहमहं नमामि । ॐ सर्वात्मानमात्मानं नृसिंहमहं नमामि । इति च स्तुत्यादिकं कृत्वा पूर्वोक्तमालामन्त्रत्रयं समुच्चित्य पठेत् । भगवतो मस्तकात्पदान्तालम्बिनीं व्यापिनीं मालां दत्त्वा भगवन्तमतिसंतुष्टं संचिन्त्य सदादिमन्त्रनवकैर्नमस्कारखण्डे वक्ष्यमाणैः स्तुतिनमस्कारौ कुर्वन्नभेदप्रतिपत्तिरूपमात्मसमर्पणं कुर्यात् । ॐ उग्रं सच्चिदानन्दपूर्णप्रत्यक्सदात्मानं नृसिंहं परमात्मानं परं ब्रह्माहं नमामि । ॐ वीरं सच्चिदानन्दपूर्णप्रत्यक्सदात्मानं नृसिंहं परमात्मानं परं ब्रह्माहं नमामि । ॐ महान्तं सच्चिदानन्दपूर्णप्रत्यक्सदात्मानं नृसिंहमित्यादि । ॐ विष्णुं सच्चिदानन्दमित्यादि । ॐ ज्वलन्तं सच्चिदानन्दमित्यादि । ॐ सर्वतोमुखं सच्चिदानन्दपूर्णप्रत्यक्सदा-

१ म. 'मप्रकाम' । २ अ. 'परत्र' । ३ अ. 'परत्र' ।

# तथा ब्रह्माणमेव विष्णुमेव रुद्र-मेव विभक्तांस्त्रीनेवाविभक्तांस्त्रीनेव

त्मानं नृसिंहमित्यादिना । ॐ भीषणं सच्चिदानन्दपूर्णप्रत्यक्सदात्मानं नृसिंह-मित्यादिना । ॐ भद्रं सच्चि० । ॐ मृत्युमृत्युं सच्चिदानन्दपूर्णप्रत्यक्सदात्मानं नृसिंहं परमात्मानं परं ब्रह्माहं नमामीति सन्मन्त्रनवकम् । ॐ उग्रं सच्चिदानन्दपूर्णप्रत्यक्चिदानन्दात्मानं नृसिंहं परमात्मानं परं ब्रह्माहं नमामीत्यादिकं चिन्मन्त्रनवकमूह्यम् । ॐ उग्रं सच्चिदानन्दं पूर्णप्रत्यगानन्दात्मानं नृसिंहं परमात्मानं परं ब्रह्माहं नमामीत्यानन्दमन्त्रनवकमूह्यम् । ॐ उग्रं सच्चिदानन्दपूर्णप्रत्यगनन्तात्मानं नृसिंहं परमात्मानं परं ब्रह्माहं नमामीत्याद्यनन्तमन्त्रनवकमूह्यम् । ॐ उग्रं सच्चिदानन्दपूर्णप्रत्यगात्मानं नृसिंहं परमात्मानं परं ब्रह्माहं नमामीत्याद्यात्ममन्त्रनवकमूह्यम् । इत्यात्मसमर्पणं कृत्वा ब्रह्मात्मैकत्वप्रतिपत्त्या प्रणवं जपन्पूजापरिपूर्तिं विधाय चतुर्मूर्तियोगं कुर्यात् । तथाहि । प्रणवमुच्चरन्नमृतमास्राव्य मूर्तिचतुष्टयमुपहारैश्चतुर्धा संपूज्य मूर्तिचतुष्टयं तेजसो जातं तेजोमयं लिङ्गचतुष्टयं स्मृत्वा प्रणवं समन्त्रराजमुच्चरँल्लिङ्गचतुष्टयमेकीकृत्यामृतमास्रावयेदिति चतुर्मूर्तियोगप्रकारः । एवं चतुर्मूर्तियोगं कृत्वा ब्रह्मयोगः कर्तव्य इत्याह—तथा ब्रह्माणमेवेति । तथा यथा चतुर्षु स्थानेषु मूर्तिचतुष्टयं स्मृत्वा संपूज्य तेजोमयमूर्तिचतुष्टयं संहृत्यामृतास्रावणलक्षणश्चतुर्मूर्तियोगः कृतस्तथा ब्रह्माणं ब्रह्मसर्वेश्वरमेव सरस्वतीमूलप्रकृतिसहितं सपरिवारं संचिन्त्य पूजादि कुर्यादित्यर्थः । अथ विष्णुयोगमाह—विष्णुमेवेति । चतुर्ष्वपि स्थानेषु विष्णुं सर्वेश्वरमेव श्रीमूलप्रकृतिसहितं सपरिवारं संचिन्त्य पूजादि कुर्यादित्यर्थः । रुद्रयोगमाह—रुद्रमेवेति । चतुर्ष्वपि स्थानेषु रुद्रमेवोमामूलप्रकृतिसहितं सपरिवारं स्मृत्वा पूजादिकमाचरेदित्यर्थः । भेदयोगमाह—विभक्तांस्त्रीनेवेति । विभक्तान्भिन्नशरीरांस्त्रीन्ब्रह्मादिसर्वेश्वरानेव प्रकृतित्रयसहितान्सपरिवारांश्चतुर्ष्वपि स्थानेषु संचिन्त्यार्चनादिकमाचरेत् । अस्मिन्योगे सर्वत्र द्वात्रिंशदष्टचतुर्दलानि पद्मानि पूर्वोक्तदेवताविशिष्टानि स्मर्तव्यानि । तत्र पीतश्चतुर्मुखः स्रुक्स्रुवाक्षमालादण्डकमण्डलुधरश्चतुर्बाहुर्ब्रह्मा । अक्षस्रक्पुस्तकमुद्राकलशधरा श्वेता सरस्वती । विष्णुश्चक्रशङ्खगदापद्मधरो विद्युद्वर्णः । पद्मद्वयश्रीफलाभयधरा रक्ता श्रीः । परशुहरिणशूलकपालधरः श्वेतो रुद्रः । पाशाङ्कुशाभयवरधरा श्यामोमा । सर्वत्र मूर्तित्रयमेकपीठयुतं ध्येयं शक्तयस्तु मूर्त्यङ्कमध्ये वामोरुदेशे वा ध्येयाः । अष्टदलेषु च वेदादिकं वाराहादिकं शर्वादिकं सदादिकमित्याद्यावरणचतुष्टयं प्रत्येकं ध्येयम् । अथाभेदयोगमाह—अविभक्तांस्त्रीनेवेति । अविभक्तानेकशरीरांस्त्रींस्त्रीन्ब्रह्मादी-

लिङ्गरूपानेव च संपूज्योपहारैश्चतुर्थ्याऽथ लिङ्गान्संहृत्य तेजसा शरीरत्रयं संव्याप्य तदधिष्ठानमात्मानं संज्वाल्य तत्तेजं आत्मचैतन्यैरूपं बलमवष्टभ्य

ऽशक्त्यविभागस्वरूपमूलप्रकृतिमायासहितान्सपरिवारांश्च चतुर्ष्वपि संचिन्त्य पूजादिकमाचरेत् । तत्र सर्वेश्वरो हरिणपरशुशङ्खचक्राक्षवलयदण्डधरस्त्रिमुखोऽनिर्देश्यवर्णो ध्येयः । पाशाङ्कुशपद्मद्वयमुद्रापुस्तकधरा त्रिमुख्यनिर्देश्यवर्णा प्रकृतिः स्मर्तव्या । लिङ्गयोगमाह—लिङ्गरूपानेव च संपूज्येति । सशक्तिकान्सपरिवारान्ब्रह्मादीन्सर्वत्र ज्योतिर्लिङ्गरूपानेव संचिन्त्य पूजादिकमाचरेदित्यर्थः । पूजासाधनं प्रकारं चाऽऽह—उपहारैश्चतुर्थ्येति । उपहारैरमृतरूपैरर्घ्यपाद्यादिभिर्जलादिभिर्वा । चतुर्थ्येत्यस्यार्थो व्याख्यातः पूर्वमेव । संपूज्य पुनः किं कर्तव्यमित्याह—अथ लिङ्गान्संहृत्येत्यादिना । अथ पूजानन्तरं लिङ्गान्स्थानचतुष्टयस्थज्योतिर्लिङ्गानि प्रणवोच्चारेण संहृत्यैकीकृत्वाऽमृतमाप्लाव्य सर्वदेवतात्मकं तत्तेजो वर्धयेदित्यर्थः । अयं च योगक्रमोऽत्रोक्तः पूर्वत्राप्यनुसंधेयः । चिदवष्टम्भयोगमाह—तेजसा शरीरत्रयं संव्याप्येत्यारभ्यावष्टभ्येत्यन्तेन । तेजसा पूर्वोक्तेन सर्वदेवतात्मकेनाऽऽनन्दामृतवर्धितेन शरीरत्रयं यस्य स्थूलसूक्ष्मकारणलक्षितस्य शरीरत्रयस्यान्तरिदं पूजादिकं कृतं तच्छरीरत्रयं तेन तेजसा तत्त्रयव्यापकरूपेण भेदेन संव्याप्य सम्यक्सबाह्याभ्यन्तरं व्याप्येत्यर्थः । ननु सामान्यशरीरं ब्रह्मज्ञानपरशक्त्यात्मकं देवस्य शरीरत्वेन संकल्प्य तत्रेदं सर्वं कृतं तदेव च शरीरमिह सर्वदेवतात्मकं तेज उच्यते तदनेन शरीरेण व्याप्य शरीरत्रयं किमात्मकं तदाधारभूतकारणाद्यात्मकमिति चेन्न । तस्य पीठादिरूपत्वेन शरीरत्वाभावात् । नायं दोषः । यतो न पीठादिरूपत्वकल्पनामात्रेण शरीरत्वं कारणादेरपगच्छति कारणादिरूपशरीरमेव हि परोपलब्ध्यधिष्ठानत्वादिना पीठादिकमुच्यते । अतस्तेन साक्ष्याकारज्ञानात्मकेन तेजसा शरीरत्रयं संव्याप्य तदधिष्ठानं शरीरत्रयस्याप्यधिष्ठानभूतं ब्रह्मात्मकं चैतन्यरूपं संज्वाल्य शरीरत्रयं संव्यापकज्ञानतेजसा च शरीरत्रयेऽपि ज्ञानतेजसा कवलीकृते तद्व्यर्किचित्तेजोभावमापन्ने विभज्येतेत्यर्थः । तदेवंभूतं तेजः शरीरत्रयव्यापकमात्मचैतन्यरूपं बलं तस्मिन्हि ब्रह्मज्ञानतेजसि ब्रह्मात्मचैतन्यं शरीरचतुष्टयसंहारकमभिव्यक्तमिति तत्तेज आत्मचैतन्यरूपमित्युच्यते । बलं च तत्तेजः सर्वद्वैतपरिभवं संहारसामर्थ्यरूपत्वात्तस्य तद्बलमवष्टभ्य । अत्यवधा-

१ क. छ. 'जसाऽऽत्म' । २ क. ग ङ. छ. 'न्यस्वम' । ३ अ. साक्षात्कार' ।

**तस्य गुणैरैक्यं संपाद्य महास्थूलं महासूक्ष्मे महासूक्ष्मं महाकारणे च संहृत्य मात्राभिरोतानुज्ञात्रनुज्ञाविकल्परूपं**

नेन च सर्वचलनपरित्यागपूर्वकं चेतःसाक्ष्येकाकारत्वापादनं तदवष्टम्भो नाम। एवं शरीरचतुष्टयं संहारोन्मुखं कृत्वा गुणयोगः कर्तव्यो मन्दमध्यमयोरित्याह— गुणैरैक्यं संपाद्येति। गुणैराप्तेरादिमत्वाद्वोत्कर्षादुभयत्वाद्वा मितेरपीतेर्वा तुरीयत्वाच्चिद्रूपत्वात्सूक्ष्मत्वाद्बीजत्वात्साक्षित्वाच्चेत्युक्तैरैक्यं वाच्यवाचकयोरेकत्वं संपाद्य संचिन्त्येत्यर्थः। अथ मन्दमध्यमयोः संहारयोगोऽपि तस्य ह वै प्रणवस्य या पूर्वा मात्रा सा प्रथमपादोभयतो भवतीत्यत्रोक्तक्रमेण केवलप्रणवोच्चारणेन कर्तव्य इत्याह—महास्थूलमित्यादिना। महास्थूलं विराडात्मकं स्थूलशरीरम्। महत्त्वं चास्य पूर्वमध्यात्मपरिच्छिन्नस्थूलशरीरमपेक्ष्य। महासूक्ष्मं हिरण्यगर्भात्मकं सूक्ष्मशरीरमध्यात्मसूक्ष्ममपेक्ष्य। महाकारणमीक्षणाद्यवस्थं बहिर्मुखसदात्मकं प्रलयावस्थं च सत्समस्तसंसारवासनाविशिष्टतया बहिर्मुखोत्सुकत्वेन साक्ष्येकाकारत्वाभावात्। किंचिद्बहिर्मुखमेव हि कारणात्मकं सत्तत्तथाऽपि सर्वजगत्कारणत्वेन महाकारणं भवत्यध्यात्मपरिच्छिन्नसौषुप्तशरीरमपेक्ष्य। संहारसाधनमाह—मात्राभिरिति। उक्तगुणैर्विराडादिपादरूपाभिरकारोकारमकारमात्राभिरित्यर्थः। अत्र मात्राभिरित्येवोक्तत्वात्केवलप्रणवेनायं योगः कर्तव्य इति गम्यते। प्रकरणबलात्पादसंयोगेऽपि न दोषः। अथ कारणसंहारायोतादियोगमाह—ओतेत्यादिना। ओतादियोगास्तूक्तास्तुरीयखण्डे चोच्यन्ते। तत्रोतादियोगानन्तरमेवोतादिमन्त्रास्तुरीयखण्ड एव सूचिता ज्ञातव्याः। ॐ नमो भगवते नृसिंहायाऽऽत्मन ओतप्रोतादिभावाय सर्वाधिष्ठानाय सर्वात्मने सर्वायाद्वयाय सर्वात्मन एकाय परमार्थसदात्मने व्याप्ताय सच्चिदानन्दघनैकरसायाव्यवहार्यायाद्वयाय नमः। ॐ नमो भगवते नृसिंहायोंकारात्मन ओतप्रोतभावाय सर्ववाचकाय वाङ्मात्ररूपाय सर्वरूपात्मने चिन्मात्ररूपाय सर्वात्मने परमेश्वरायाभिन्नायामृतायाभयाय परब्रह्मणे नम इत्योतमन्त्राः १ ॐ नमो भगवते नृसिंहात्मने सर्वानुज्ञात्रे सदात्मदात्रेऽसङ्गायाविक्रियायाद्वयाय नमः। ॐ नमो भगवते नृसिंहायोंकारात्मने सर्वानुज्ञात्रे वाङ्मात्ररूपाय सर्वरूपात्मने चिन्मात्ररूपाय सर्वात्मने सदात्मकर्त्रे परमेश्वरायाभिन्नायामृतायाभयाय परब्रह्मणे नम इत्यनुज्ञातृमन्त्रः २ ॐ नमो भगवते नृसिंहात्मनऽनु-

१ ङ. णेन च। २ ङ. य प।

चिन्तयन्ग्रसेत् ॥

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीये षष्ठोपनिषदि
तृतीयः खण्डः ॥ ३ ॥

## तं वा एतमात्मानं परमं ब्रह्मोंकारं तुरीयों-
## काराग्रविद्योतमनुष्टुभा नत्वा प्रसाद्योमिति

ज्ञैकरसाय प्रज्ञानघनायाऽऽदिसिद्धायाद्वयाय नमः । ॐ नमो भगवते नृसिंहायों-कारात्मनेऽनुज्ञैकरसाय सर्वानुज्ञात्मने वाङ्मात्ररूपाय सर्वरूपात्मने चिन्मात्ररू-पाय सर्वात्मने परमेश्वरायाभिन्नायामृतायाभयाय परब्रह्मणे नम इत्यनुज्ञामन्त्रः ३ ॐ नमो भगवते नृसिंहायाऽऽत्मनेऽविकल्पायाद्वयाय नमः । ॐ नमो भगवते नृसिंहायोंकारात्मनेऽविकल्पायाद्वयाय चिन्मात्ररूपाय सर्वात्मने परमेश्वराया-भिन्नायानामरूपायाव्यवहार्यायाद्वयाय स्वप्रकाशाय महानन्दायाऽऽत्मनेऽमृ-तायाभयाय परब्रह्मणे नम इत्यविकल्पमन्त्रः ४ एवमेतैश्चतुर्दशयोगैः सर्वमपि जगत्स्वात्ममात्रात्मतया विलाप्यानुशासनखण्डे वक्ष्यमाणलक्षणं परमात्मानं हंसः सोऽहमित्यात्मत्वेन प्रतिपद्यानुज्ञाप्रणवेन चिदात्मकेन चिदचिदात्मकेन वा सर्वदा स्वात्मस्थो भवेदित्यनुष्ठानक्रमसंक्षेपः । विस्तरस्तु तत्प्रतिपादकेषु ग्रन्थेषु द्रष्टव्यः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्री-
मद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीये षष्ठोपनिषदि
तृतीयः खण्डः ॥ ३ ॥

---

अथ स्तुतिनमस्कारविशिष्टां प्रतिपत्तिं वक्तुमारभते—तं वा एत-मिति । तं विराड्वैश्वानरहिरण्यगर्भसूत्रप्राज्ञाज्ञेश्वराव्याकृतब्रह्मरूपमेतं स्थूलं विश्वं सूक्ष्मं तैजसं सौषुप्तप्राज्ञाव्याकृतप्रत्यग्रूपमात्मानमेतत्सर्वव्यापकमत्तारं परमं ब्रह्म परब्रह्मरूपमोंकारं चतुर्विधाकारोकारमकारार्धमात्रारूपं चेत्यर्थः । तुरीयोंकाराग्रविद्योतमोतादिरूपस्य तुरीयोंकारस्य बिन्दुनादशक्तिशान्तरूप-स्याग्रे पूर्वभागे साक्षितया विद्योतमानं प्रकाशमानं स्वत एव तमात्मान-मनुष्टुभा नमामिपदपर्यन्तया स्तुतिपूर्वकं नत्वा प्रसाद्य तत्प्रसादेन लब्धसंसा-रसंहारसामर्थ्यः सन्नोमिति संहृत्य चतुर्मात्रमोंकारमुच्चरन्विराडादिकं क्रमेण

---

१ ट. 'सूत्राज्ञानेश्व' । २ ठ. 'रात्माव्या' ।

संहृत्याहमित्यनुसंदध्यादथैतमेवाऽऽत्मानं परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योतमेकादशात्मानमात्मानं नारसिंहं नत्वोमिति संहरन्ननुसंदध्यादथैतमेवाऽऽत्मानं परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योतं प्रणवेन संचिन्त्यानुष्टुभा

संहृत्याहमित्यनुसंदध्यात् । अवशिष्टेनाहंपदेनावशिष्टं तुरीयतुरीयमद्वितीयमात्मानमनुचिन्तयेदित्यर्थः । अत्र नत्वेतिवचनं(नेन) नमामिपदस्य नमस्कार एवार्थः । तथा चोग्रमित्यादिद्वितीयान्तपदानां यथाश्रुत एवार्थः । उपासना चेयमनुष्टुप्पादमात्रामिश्रा न भवति । अनुष्टुभस्तुरीयप्रतिपत्तिमात्रशेषत्वात् । तुरीयोंकाराग्रविद्योतमनुष्टुभा नत्वेति युक्तम् । ओमिति संहृत्येतिवचनाच्च प्रणवेनैव संहारः । अयमर्थः । चतुर्मात्रमोंकारं समुच्चरंस्तस्य सामर्थ्यस्य साधकं तुरीयतुरीयं परमात्मानं मृत्युमृत्युमितिपदपर्यन्तयाऽनुष्टुभा स्तुत्वा नमामीति मनसा कायेनोभाभ्यां प्रणम्य प्रणवमुच्चरन्सर्वं संहृत्याहमितिपूर्णोऽहंविमर्शरूपेण ब्रह्मज्ञानेनावशिष्टमात्मानमनुसंदध्यादिति । अथानुष्टुप्पदसाधनां स्तुतिनमस्कारविशिष्टामुपासनामाह—अथैतमिति । अथशब्दः क्रमार्थः । क्रमस्तु क्रमखण्ड एवास्माभिरूक्तः । एतमेव तं वा एतमित्युक्तमेवेत्यर्थः । विद्योतमित्यन्तमुक्तार्थम् । एकादशात्मानमुग्रत्वादिगुणभेदवैशिष्ट्यादेकादशस्वरूपमात्मानं प्रत्यग्रूपं नारसिंहं स्वात्मबन्धहरं परं परमात्मानं नत्वा स्तुतिपूर्वकं नमस्कृत्य तत्प्रसादलब्धवीर्यः सन्नोमिति सर्वं संहरन्नवशिष्टं ब्रह्म स्वप्रकाशमनुसंदध्यात् । तदात्मनाऽवतिष्ठेतेत्यर्थः । अयं भावः । ओंकारं समुच्चरंस्तुरीयतुरीयं प्रतिपद्योग्रमित्याद्येकैकेन पदेनोग्रत्वादिगुणविशिष्टं तमेव संचिन्तयन्स्तुत्वाऽऽत्मानं नृसिंहोऽहमिति तमेव वाक्यार्थरूपं स्तुत्वाऽहं नमामीति स्वात्मसमर्पणलक्षणं नमस्कारं विधाय वीरादिमन्त्रैरप्येवमेव स्तुतिनमस्कारौ कृत्वा पुनः प्रणवमुच्चार्य सर्वं संहृत्य स्वात्मन्यवतिष्ठेतेति । मन्त्रास्तु क्रमखण्डे लिखिता द्रष्टव्याः । पुनरपि परसाधनं नमस्कारादिविशिष्टं चिन्तनान्तरमाह भगवतः प्रसादातिशयार्थम् । अथैतमेवेत्यादिना । उक्तक्रमार्थ एवाथशब्दः । एतमेवेत्यादि विद्योतमित्यन्तमुक्तार्थम् । प्रणवेन चतुर्मात्रेण तुरीयतुरीयपर्यन्तं प्रत्यगात्मानं त्वंपदार्थरूपं संचिन्त्येति प्रणवेन संचिन्त्येत्यस्यार्थः । उत्तरत्रानुष्टुभा परमं ब्रह्म संभाव्येतिविशेषश्रवणादहंपदेनाऽऽत्मान-

---

१ ट. 'प्रतादि' ।

**सच्चिदानन्दपूर्णात्मसु नवात्मकं सच्चिदानन्दपूर्णात्मानं परमात्मानं परं[1] ब्रह्म संभा-**

मादायेत्यहंपदेन शोधितत्वंपदार्थादानश्रवणाच्चानुष्टुभेत्यनुष्टुबन्तर्गतैरुग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं नृसिंहं भीषणं भद्रं मृत्युमृत्युमितिपदैरित्यर्थः। अविशिष्टविनियोगान्तरश्रवणादहंपदेनाऽऽत्मानमादाय नमसा ब्रह्मणैकीकुर्यादिति नमाम्यहमिति पदद्वयं तावच्छोधितप्रत्यगात्मादाने तस्योग्रादिपदनवकं[2] शोधितब्रह्मणैकत्वप्रतिपत्तौ च विनियुक्तम् । अथादेवावशिष्टं नृसिंहपदं नवपदविशिष्टब्रह्मवाचकमिति गम्यते। तद्धि नृसिंहरूपस्य ब्रह्मणो वाचकमिति प्रधानभूतविशेष्यवाचकं[3] युक्तम् । अतोऽनुष्टुभेत्यनुष्टुबन्तर्गतोक्तपदनवकेनेत्येवेत्यर्थः। कथंभूतं ब्रह्मानुष्टुप्पदैरन्वेष्टव्यमित्याह—सच्चिदानन्दपूर्णात्मसु नवात्मकमिति। ब्रह्मणः स्वरूपभूतेषु सच्चिदानन्दपूर्णप्रत्यक्षु पञ्चस्वपि प्रत्येकं नवात्मकं सदादीनामेकैकस्यापि सर्वसंहारसमर्थत्वादिरूपत्वसिद्धये प्रत्येकमुग्रमित्यादिपदनवकं योज्यमित्यर्थः। ॐ उग्रं सदात्मानं वीरं सदात्मानं महान्तं सदात्मानं विष्णुं सदात्मानं ज्वलन्तं सदात्मानं सर्वतोमुखं सदात्मानं नृसिंहं सदात्मानं भीषणं सदात्मानं भद्रं सदात्मानं मृत्युमृत्युं सदात्मानमिति तत्संयोगक्रमः। उग्रं चिदात्मानं वीरं चिदात्मानमित्यादिरूपचित्संयोगक्रमः। उग्रमानन्दात्मानं वीरमानन्दात्मानमित्यादिरूप आनन्दयोगक्रमः। उग्रमनन्तात्मानमुग्रं पूर्णात्मानमित्यादिरूपो वा पूर्णसंयोगक्रमः। उग्रं प्रत्यगात्मानमुग्रमात्मानमित्यादिरूपो वाऽऽत्मसंयोगक्रमः। एवं ब्रह्मविशेषक्रमभूतानां सदादीनां ब्रह्मवत्सर्वसंसारविरोधित्वप्रतिपत्त्यर्थमुग्रत्वादिरूपमभिधाय तेषामेव सदादीनां ब्रह्मवत्सच्चिदानन्दपूर्णात्मत्वप्रतिपत्त्यर्थमुग्रमित्यादिपदसमूहस्य सदात्मानमित्यादिपदसमूहस्य च मध्ये सदादिविशेषणत्वेन सच्चिदानन्दपूर्णप्रत्यक्पदानि प्रक्षेप्तव्यानीत्याह—सच्चिदानन्दपूर्णात्मानमिति। अत्रापि सच्चिदानन्दपूर्णात्मस्वित्यनुषज्यते। अतः सच्चिदानन्दपूर्णात्मसु पञ्चस्वपि सच्चिदानन्दपूर्णात्मानमिति संबन्धे सदादीनामेकैकस्यापि ब्रह्मवत्सच्चिदानन्दादिस्वरूपत्वं सिद्धं भवति। अतो ब्रह्मणो विशेषणानां चैकत्वेन ब्रह्मण एकरसत्वं च सेत्स्यति। ॐ उग्रं सच्चिदानन्दपूर्णप्रत्यक्सदात्मानमित्यादिक्रमेण योगो द्रष्टव्यः। विशेष्यब्रह्मप्रतिपत्त्यर्थं तद्वाचकं पदद्वयमाह—परमात्मानं परं ब्रह्मेति। ॐ उग्रं सच्चिदानन्द० परमात्मानं परं ब्रह्मेत्यादिप्रयोगक्रमः। अत्र यद्यपि विशेष्यवाचकनृसिंहपदपर्यायत्वेन

१ क. ग. घ. ङ. परमं। २ ङ. °वकारो°। ३ ङ. °शेषवा°।

व्याहमित्यात्मानमादाय नमसा ब्रह्मणैकी कुर्यादनुष्टुभैव वैष उ एव त्रेष हि सर्वत्र सर्वदा सर्वात्मा सिंहोऽसौ परमेश्वरोऽसौ हि सर्वत्र सर्वदा सर्वात्मा सन्सर्वमत्ति

परमात्मानं परं ब्रह्मेति पदद्वयमेव श्रुतं तथाऽपि तस्मात्पूर्वं नृसिंहपदं प्रयोक्तव्यमन्यथा मन्त्रराजगतस्य नृसिंहपदस्य परित्यागप्रसङ्गात् । पदद्वयात्पूर्वमेव च तस्य प्रयोगो न्याय्यस्तत्स्थाने[1] पदद्वयस्य प्राप्तत्वेन तस्य प्राधान्यात् । एवं तत्पदार्थं संभाव्याहंपदेन शोधितं प्रत्यगात्मानमादाय नम इतिपदेन तस्य ब्रह्मणैकत्वं भावनीयमित्याह—अहमित्यात्मानमादाय नमसा ब्रह्मणैकी कुर्यादिति । ॐ उग्रं सच्चिदानन्दपूर्णप्रत्यक्सदात्मानं नृसिंहं परमात्मानं परं ब्रह्माहं नमामीत्यादिक्रमेण क्रमखण्डोक्तमन्त्रा द्रष्टव्याः । अथ प्रणवादिकं विनाऽनुष्टुभैव ब्रह्मात्मैक्यं प्रतिपत्तव्यमित्याह—अनुष्टुभैव वेति । अत्रोग्रत्वादिगुणलक्ष्यो नृसिंहस्तत्पदार्थोऽहमिति त्वंपदार्थवाचकः । नमामीति पदं तत्त्वंपदार्थयोरैक्यवाचकमिति भावः । मन्त्रराजमध्यगतनृसिंहपदेनैव च ब्रह्मात्मैक्यं प्रतिपत्तव्यमित्याह—एष उ एव त्रित्यादिना । तत्र नृशब्दस्य प्रत्यगर्थतामाह—एष इति । एष सर्वेषां स्वभावसिद्ध आत्मा । उ एवेति तस्यैव नृशब्दार्थत्वमन्यत्रानुपपत्तेरवधीयते त्रिति नृसिंह इत्यत्र नृशब्दस्यार्थ इत्यर्थः । कथमस्यैव नृशब्दार्थत्वमित्यत आह—एष हीति । एष हि यस्मात्सर्वत्र सर्वस्मिन्देशे वर्तते सर्वस्याऽऽत्मरूपं सच्चिदानन्दरूपेण सर्वदा सर्वस्मिंश्च काले वर्तते नित्यत्वात्सर्वात्मा च भावाभावात्मकस्य जगतः सच्चिद्व्यतिरेकेणाभावात्सर्वात्मत्वमस्यावगन्तव्यमिति । देश[तः]कालतो वस्तुतश्चापरिच्छिन्न आत्मेत्यर्थः । अयं भावः । त्रिति नृ गताविति धातो रूपं गतिश्च व्याप्तिस्त्रिविधा मुख्या सा च प्रत्यगात्मन्येवोपपद्यते तदन्यस्य तद्दृश्यत्वेन तत्र कल्पितत्वोपपत्तेस्तस्मात्स एव नृशब्दार्थ इति । सिंहशब्दस्य तत्पदार्थवाचकत्वं दर्शयति—सिंहोऽसौ परमेश्वर इति । सिंहः सिंहशब्दस्यार्थ इत्यर्थः । असौ श्रुतिस्मृतिलोकप्रसिद्धः परमेश्वरः । सिंहशब्दस्य तदर्थवाचकतां दर्शयति—असौ हीति । असौ परमेश्वरः सर्वत्र सर्वदा सर्वात्मा सन्नित्युक्तार्थम् । सर्वमत्ति स्वात्मसात्करोति सच्चिद्रूपेणेत्यर्थः । अयं भावः । षिञ् बन्धन इति धातो रूपं सिमिति । अतः कार्यकारणरूपबन्धार्थोऽसौ तं हन्ति व्याप्य संहरतीति सिंह इत्युच्यते । ह इति हन हिंसागत्योरि-

[1] अ. 'नेन प'।

नृसिंह एवैकल एष तुरीय एष एवोग्र एष एव वीर एष एव महानेष एव विष्णुरेष एव ज्वलन्नेष एव सर्वतोमुख एष एव नृसिंह एष एव भीषण एष एव भद्र एष एव मृत्युमृत्युरेष एव नमाम्येष एवाहमेवं योगारूढो ब्रह्मण्येवानुष्टुभं संद-

त्यस्य रूपम् । तत्र हिंसा सर्वसंहारो गतिर्व्याप्तिस्त्रिविधा । तदुभयं मत्यगात्मभूते परमेश्वर एव संभवतीति स एव सिंहशब्दार्थ इति । एवं पदार्थद्वयं संशोध्य सामानाधिकरण्यादिसिद्धं पदार्थयोरत्यन्तैक्यलक्षणवाक्यार्थमाह—नृसिंह एवेति । आत्मा ब्रह्मैव ब्रह्म चाऽऽत्मैवेत्यर्थः । पदार्थद्वयकथनप्रसङ्गे प्राप्तां संसर्गवाक्यार्थतां निराचष्टे—एकल इति । एकरसः सिंह एव नैकरसो नैव च सिंह इत्यर्थः । ननु लोके संसर्गादिलक्षणो वाक्यार्थो दृष्टस्ततोऽत्रापि तथा स्यादित्याशङ्क्यास्य वाक्यार्थस्य लोकोत्तरत्वान्नैवमित्याह—एष तुरीय इति । सर्वद्वैतसंहारसमर्थत्वाच्चास्य वाक्यार्थस्यासंसर्गादिरूपत्वमित्याह—एष एवोग्र इति । संहारसमर्थत्वेऽपि मन्दप्रस्थानतया सर्वमनर्थजातं सहत इति चेन्नेत्याह—एष एव वीर इति । एष एव महानित्याद्येष एवाहमित्यन्तं सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्त इत्यादिपदव्याख्यानेनैव व्याख्यातप्रायमिति न पुनर्व्याख्यायते । तत्र तुरीयपदार्थसद्भावं दर्शयता पदान्यर्थतो व्याख्यातानीह तु तत्रोक्तमेवार्थमुपजीव्य तुरीयस्य वाक्यार्थरूपस्य सर्वसंहारसामर्थ्यकथनेन वाक्यार्थस्याखण्डतोपपाद्यत इति विशेषः । किंच पूर्वत्र तुरीये पदार्थसद्भावमात्रं दर्शितं सर्वसंहारसमर्थ इत्यादिना । इह त्वेष एवोग्र इत्यादिभिः सावधारणैर्वाक्यैरिहैव सद्भावो दर्शित इति महान्विशेषः । अत एव च वार्तिककृद्भिः प्रतिपदार्थव्याख्यानमेवकारार्थो दर्शितः—"उग्रता क्रूरताऽन्यश्च प्रतीचो ब्रह्मणो न हि" इत्यादिना । उक्तोपासनाबलेन केवलोंकारावस्थानसमर्थस्य सर्वमन्यत्साधनजातं प्रणवे संन्यस्य तेन स्वात्मानुसंधानं कर्तव्यमित्याह—एवमित्यादिना । एवं कर्मकाण्डविहितैः साधनैः पूर्वोपनिषद्युक्तोपासनयाऽत्रोक्तानुष्टुप्पादमिश्रोपासनादिभिश्च योगारूढः केवलप्रणवे योगाश्रयणसमर्थो ब्रह्मण्येवोंकारेऽनुष्टुभं संदध्यात् । सर्वमन्यत्साधनजातं ब्रह्मरूपे प्रणवेऽन्तर्भाव्य तेनाऽऽत्मानमनुसंदध्यादित्यर्थः । गतखण्ड-

१ छ. 'त्यर' । २ अ. ट. 'श्रणैवो' ।

ध्यादोंकार इति तदेतौ श्लोकौ भवतः—
संस्तभ्य सिंहं स्वसुतान्गणर्धान्संयोज्य शृङ्गै-
र्ऋषभस्य हत्वा। वश्यां स्फुरन्तीमसतीं
निपीड्य संभक्ष्य सिंहेन स एष वीरः।
शृङ्गप्रोतान्पदा स्पृष्ट्वा हत्वा तामग्रसत्स्वयम्।

---

चतुष्टयोक्तेऽर्थे मन्त्राववतारयति—तदिति। तत्तत्रोक्तेऽर्थे श्लोकौ मन्त्रौ ब्राह्मणमूलभूतौ संभवतः। संस्तभ्य सिंहमुपाध्यविवेकवशाच्चलन्तमात्मानं सिंहं परमार्थतो निरस्तनिखिलबन्धं संस्तभ्य विवेकविज्ञानेन स्वमहिम्न्येव स्थिरीकृत्य किमित्याह। स्वसुतान्स्वस्य सिंहात्मनः सुतान्स्थूलविश्वादीन्गुणर्धान्गुणैः स्थूलत्वात्स्थूलभुक्त्वाच्चेत्याद्यैर्ऋद्धान्वृद्धिं प्राप्तान्विराड्वैश्वानरादिभावं गतानिति मन्त्रस्य प्रथमपादेन प्रथमखण्डार्थः संगृहीतः। ऋषभस्य च्छन्दसामृषभस्य प्रधानस्य प्रणवस्य शृङ्गैर्मात्राभिस्तान्स्वसुतानाप्त्यादिभिः सामान्यैः संयोज्य मात्रापादैक्यं प्रतिपद्येत्यर्थः। हत्वा स्थूलं सूक्ष्मे सूक्ष्मं कारणे च मात्रात्रयेण संहृत्येत्यर्थः। तुरीयमात्रात्रयाकारेण संहारप्रकारमाह—वश्यामित्यादिना। तां कारणरूपां मायामोतयोगेनाऽऽत्मवशां कृत्वाऽनुज्ञातृयोगेनाऽऽत्मसत्तास्फुरणाधीनतया सतीं स्फुरन्तीं तत्र कल्पितया संभाव्यानुज्ञायोगेनासतीमविद्यमानसमां निरस्तप्रसवां कृत्वा निपीड्य साक्षिचिदाकारमेवातिप्रयत्नेन मनः कुर्वंस्तां साक्षिसिंहचैतन्ये स्वविरोधिन्येव मज्जयित्वेत्यर्थः।

उक्तं च—"ओतत्वाच्च तुरीयस्य वश्यानुज्ञातृतोऽपराम्।
अनुज्ञैकरसत्वाच्च संहृत्यैव द्वयाकृतिः" इत्यादि।

संभक्ष्य सिंहेन बुद्धिवृत्त्यारूढेन तुरीयेण स्वात्मना ब्रह्मणा तावन्मात्रेण संभक्ष्य तत्राध्यस्तां मायां तस्मिन्नुदितेन ज्ञानेन तावन्मात्रां कृत्वेत्यर्थः। संभक्ष्य सिंहेनेति मन्त्रराजेन तुरीयतुरीयं चिन्तयंस्तां मायां संहृत्येति वाऽर्थः। स एवं विद्वान्वीरः पुनः संसारापरिभाव्यो भवति नृसिंहरूपत्वात्तस्येति द्वितीयखण्डार्थः संगृहीतः। शृङ्गप्रोतान्प्रणवमात्राव्याप्तान्विराडादींश्चतुःसप्तकान्ब्रह्मसर्वेश्वरादींश्च पदाऽनुष्टुप्पादचतुष्टयेन स्पृष्ट्वा संयोज्य संचिन्त्य हत्वा क्रमेण संहृत्य तां कारणभूतां मायामुक्तप्रकारेण तुरीयमात्रया पादेन च यथासंभवमग्रसत्संहृतवान्। स्वयं वीरो विद्वान्नृसिंह आत्मेति तृतीयखण्डार्थः संगृहीतः। नत्वा च बहुधाऽनन्तरखण्डोक्तप्रकारेणाऽऽत्मभूतनृसिंहमनेकप्रकारेण

## नत्वा च बहुधा दृष्ट्वा नृसिंहः स्वयमुद्बभाविति ॥

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीये षष्ठोपनिषदि

चतुर्थः खण्डः ॥ ४ ॥

## अथैषो एवाकार आप्ततमार्थ आत्मन्येव नृसिंहे

नत्वा । चशब्दात्स्तुत्वा चेत्यर्थः । बहुधा दृष्ट्वा च स्वात्मानं नृसिंहं नमस्कारमन्त्रैः प्रणवेन मन्त्रराजेन नृसिंहपदेन च बहुधा दृष्ट्वा । नृसिंहः स्वयमुद्बभौ पूर्वमपि स्वयं नृसिंह एव सन्नज्ञानादनभिव्यक्ततया देवप्रसादजेन ज्ञानेन नृसिंहः स्वयमुद्बभौ । अभिव्यक्त इत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्रीमद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीये षष्ठोपनिषदि

चतुर्थः खण्डः ॥ ४ ॥

ओंकारेऽनुष्टुभमन्तर्भाव्य तेन स्वात्मानुसंधानं कर्तव्यमित्युक्तं तत्कथमनुष्टुभः प्रणवेऽन्तर्भावः कथं वा तेनाऽऽत्मानुसंधानं कर्तव्यमित्याकाङ्क्षायां तत्प्रदर्शनाय खण्ड आरभ्यते—अथेति । तत्राकारस्याततिजस्य व्याप्तप्रत्यगर्थत्वमभिधाय तदुपपादनाय प्रतीचि मन्त्रराजार्थसद्भावमभिधाय स एवाकारस्य योग्योऽर्थ इति नियम्यते प्रथमपर्यायेण । द्वितीयपर्याये शङ्कान्तरपरिहाराय प्रत्यगात्मन एवोत्कृष्टोकारार्थत्वमभिधायाऽऽत्मनं उत्कृष्टत्वोपपादनायाऽऽत्मनि मन्त्रराजार्थसद्भावमभिधाय स एवोकारस्य योग्योऽर्थ इति नियम्यते । तृतीये तु पर्याये महाविभूतिविशिष्टस्य प्रत्यग्ब्रह्मण एव मकारार्थत्वमभिधाय विभूतिमत्त्वेन प्राप्तदोषपरिहाराय ब्रह्मणि मन्त्रराजान्तर्भावात्तद्वाचकप्रणवमात्रास्वपि तदन्तर्भावो ज्ञातव्यः । अन्यथा तद्वाचकायोगाद्वाच्यवाचकयोरभेदाच्च । तत्र तावदकारस्य व्याप्ततमार्थत्वमततिजत्वबलेनाऽऽह—अथेति । अनुष्टुप्पादचतुष्टयेन चतुर्मात्रप्रणवेनोपासनमभिधाय केवलेन त्रिमात्रेण प्रणवेनाऽऽत्मप्रतिपत्तिरभिधीयत इत्यथशब्दस्यार्थः । एषा मात्रा । उ एव । का सा मात्रेत्यत आह—अकार इति । सा चाऽऽप्ततमार्थ एवेत्येवकारस्यान्वयः । अस्त्वकारस्याततिजत्वेन व्याप्ततमार्थत्वं स तु व्याप्ततमोऽकारार्थः को यस्मिन्नकारस्य वृत्तिर्भवतीत्यत आह—आत्मन्येवेति । आत्मन्येव प्रत्यगात्मन्येवेत्यर्थः । तस्याकारार्थत्वाय त्रिविधव्याप्तिसिद्धये सर्वसंहर्तृत्वमाह—नृसिंह इति । स्वात्मबन्धहर इत्यर्थः । ततश्च बृहत्त्वात्तत्राका-

१ अ. 'न ह' ।

**ब्रह्मणि वर्तत एष ह्येवाऽऽप्ततम एष हि साक्ष्येषं ईश्वरोऽतः सर्वगतो न हीदं सर्वमेष हि व्याप्ततम इदं सर्वं यदयमात्मा मायामात्रमेष एवोग्र एष हि व्याप्ततम**

रस्य वृत्तिर्युक्तेत्याह—ब्रह्मणि वर्तत इति। नन्वन्येऽपि व्याप्ता आकाशादयः पदार्थाः सन्त्यतस्तेषामन्यतमस्मिन्नकारस्य वृत्तिरस्तु न तेषां व्याप्तत्वेऽपि व्याप्ततमत्वाभावादित्याह—एष ह्येवाऽऽप्ततम इति। कथं प्रत्यगात्मनोऽप्येतच्छरीरमात्रवर्तिनो व्याप्ततमत्वमित्याशङ्क्य सर्वबुद्धिसाक्षित्वान्नैवमिति वदन्नुक्तं सर्वसंहर्तृत्वं ब्रह्मत्वं च क्रमेण साधयति—एष हि साक्षीति। न हि साक्षिमात्रे भेदो भवतीत्यर्थः। तथाऽपीश्वरस्य भेदेनास्थितत्वान्नैवाऽऽप्ततमत्वमित्याशङ्क्य नेत्याह—एष ईश्वर इति। न हि साक्षिणो व्यतिरिक्तस्य साक्ष्यस्य जडस्येश्वरत्वं संभवतीत्यर्थः। फलितमाह—अतः सर्वगत इति। तथाऽपि सर्वसाक्षिणः साक्ष्यसद्भावान्न व्याप्ततमत्वमित्याशङ्क्य साक्ष्यस्य साक्षिव्यतिरेकेणासत्त्वमाह—न हीदं सर्वमिति। तत्र हेतुमाह—एष हि व्याप्ततम इति। एष ईश्वरः साक्षीशितव्ये साक्ष्येऽतिशयेन व्याप्तः स बाह्याभ्यन्तरं स्वीकृत्य सकलोऽन्यथा साक्षित्वानुपपत्तेरित्यर्थः। अथवाऽकारस्य तावद्व्याप्ततमः कश्चिदर्थोऽभ्युपगन्तव्यः स च साक्षिणोऽन्योऽनुपपन्न इत्यकारस्य निरर्थकत्वभयादात्मनः साक्ष्यसंकोचोऽपि नाभ्युपगन्तव्य इत्यर्थः। नन्वेवमपि साक्ष्ये व्याप्ये साक्षिणो भेदेनाभेदेन वा विद्यमाने कथं व्याप्ततमत्वं संभवतीति चेत्। नायं दोषः। यतो न साक्ष्यं परमार्थतोऽस्तीत्याह—इदं सर्वं यदयमात्मेति। योऽयमात्मा स एवेदं सर्वं न तु तस्माद्भेदेनाभेदेन वा स्थितमित्यर्थः। तत्रास्य सर्वस्य मायामात्रत्वं हेतुमाह—मायामात्रमिति। मायामात्रेणापि साक्ष्येण व्याप्तिसंकोचो भवत्यतो न व्याप्ततमत्वमात्मन इति चेन्न तत्संहारसमर्थत्वादस्येत्याह—एष एवोग्र इति। उग्रत्वमप्यततिभवस्याकारस्य नैरर्थक्यभयादात्मन्यभ्युपगन्तव्यमित्याह—एष हीति। अकारस्य तावदेष एवाऽऽत्मार्थो यत एष ह्येवाऽऽप्ततमो न चाऽऽप्ततमत्वमुग्रत्वस्य सर्वसंहर्तृत्वस्याभावे संभवत्यतोऽकार एव स्वयमुग्रपदात्मा सन्नुग्रत्वमप्यात्मनो बोधयतीत्यकारस्योग्रपदात्मत्वं तावत्सिद्धमित्यनेनोक्तम्। एवं वीरादिपदात्मत्वमप्यवगन्तव्यम्। ततश्च यदुक्तमनुष्टुभं संद-

१ क. ग. 'ष हीश्व'।

एष एव वीर एष हि व्याप्ततम एष एव महानेष हि व्याप्ततम एष एव विष्णुरेष हि व्याप्ततम एष एव ज्वलन्नेष हि व्याप्ततम एष एव सर्वतोमुख एष हि व्याप्ततम एष एव नृसिंह एष हि व्याप्ततम एष एव भीषण एष हि व्याप्ततम एष एव भद्र एष हि व्याप्ततम एष एव मृत्युमृत्युरेष हि व्याप्ततम एष एव नमाम्येष हि व्याप्ततम एष एवाहमेष हि व्याप्ततमं[1] आत्मैव नृसिंहो[2] ब्रह्म भवति य एवं वेद सोऽकामो निष्काम आप्तकाम आत्मकामो

ध्यादोंकार इति तदित्थमुपपादितं श्रुत्या भवति । संहारसमर्थत्वेऽपि मन्दप्रस्थानत्वान्न संहरति किंतु सर्वमप्यनर्थजातं सहत एवेति चेन्न यतोऽयं पराभवासह इत्याह—एष एव वीर इति । वीरत्वेऽपि पूर्ववद्धेतुमाह—एष हीति । एवमपि प्रतिबन्धसंभवान्न संहरतीति चेन्नेत्याह—एष एव महानिति । महत्त्वेऽपि पूर्ववद्धेतुमाह—एष हीति । एवमेवोत्तराण्यप्यनुष्टुप्पदानि, पूर्वोक्ताशज्ञानिवर्तकत्वेनोत्थाप्य तत्तत्पदार्थात्मन्यकारार्थव्याप्त्यन्यथानुपपत्त्या तत्तत्पदात्मकेनाकारेण साधनीयम् । एवमकारेऽनुष्टुभमन्तर्भाव्य तेन प्रत्यगात्मप्रतिपत्तुः फलमाह—आत्मैव नृसिंह इत्यादिना । ज्ञानकाल एव प्रत्यग्भूतं चिदात्मकं सर्वबन्धरहितं ब्रह्म भवतीत्यर्थः । एवंविदो वेदनमात्रेण ब्रह्मत्वमुपपादयति—सोऽकाम इत्यादिना । यस्मात्स विद्वानकामो मुक्तः । सर्वविषयरहितो ज्ञानसमकाल एव तस्माज्ज्ञानसमकाल एव ब्रह्म भवतीत्यर्थः । कुतो ज्ञानसमकाल एवाकाम इति तत्र निष्कामत्वं हेतुमाह—निष्काम इति । निर्गततृष्णाभेदत्वात्तदैवेत्यर्थः । कुतस्तृष्णाभाव इति । आप्तसर्वकामत्वादित्याह—आप्तकाम इति । अनाप्तकामस्य हि तृष्णा तद्विषया भवति न तु माप्तसर्वकामस्य । कुत आप्तकामता विदुष इति । आत्मकामत्वादित्याह—आत्मकाम इति । ये पूर्वं परमानन्दानुभवरूपात्माज्ञानादाप्तव्या अनात्मभूताः कामा अभवंस्तेऽस्योक्तात्मज्ञानादज्ञाने निवृत्तेऽज्ञानकार्यत्वान्निवृत्ता आत्मानन्दमात्रतामेव प्राप्ताः । अत आत्मकामत्वादाप्तकामोऽतश्च निवृत्तसर्वतृष्णोऽतोऽकामो निर्विषयो मुक्तो

१ घ. 'मस्तस्मादात्मानमेवं जानीयादात्मै' । २ क. ग. घ. 'हो देवो ब्र' ।

न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येत्यथैषो एवोकार उत्कृष्टत-मार्थ आत्मन्येवं नृसिंहे देवे ब्रह्मणि वर्तते तस्मादेष सत्यस्वरूपो न ह्यन्यदस्त्यमेयम-

ब्रह्मैवासौ ज्ञानसमय इत्यर्थः। अस्त्वेवं ज्ञानसमये ब्रह्मत्वं शरीरपातादूर्ध्वं तु पूर्ववत्पुनरपि संसारं प्राप्नोतीति चेन्न। अज्ञानकामाद्यसत्त्वेनोत्क्रान्त्यभावादित्याह—न तस्येति। तस्याकामस्य प्राणा नोत्क्रामन्ति। कर्मफलभोगाय ह्युत्क्रमणं स्यात्। कर्म चाज्ञानकृतं विद्यया नष्टमिति तत्फलानुपपत्तेः। न तद्भोगाय प्राणा उत्क्रामन्त्यन्तकाले किं तर्ह्यत्रैव विदुष आत्मन्येव समवनीयन्त एकीभावं गच्छन्ति। स तु विद्वान्समवनीतेषु प्राणेषु शरीरे च पतिते पूर्वमपि ब्रह्मैव सन्नुत्तरकालेऽपि ब्रह्मैवाप्येति। अज्ञानकृताब्रह्मत्वनिवृत्तिरेव ब्रह्मप्राप्तिर्न तु स्वर्गादिप्राप्तिवदप्राप्तप्राप्तिः संभवति। आत्मत्वाद्ब्रह्मणो मोक्षस्य स्वर्गादिवद-नित्यत्वप्रसङ्गाच्च। नन्वात्मन्यनात्माध्यासवदात्मनोऽप्यनात्मन्यध्यासोऽङ्गीकर्तव्यः। अन्यथा लोकव्यवहारानुपपत्तेः। तस्मात्कल्पितस्यासत्त्व आत्मनोऽपि कल्पितत्वेनासत्त्वप्रसङ्गस्तस्य सत्यत्वे चानात्मनोऽपि सत्यत्वं स्यात्। एवं च सति कं विशेषमाश्रित्याऽऽत्मनः सर्वसंहारसमर्थत्वेन व्याप्तत्वादकारार्थत्वं न त्वनात्मनस्तदभावादिति पूर्वमुक्तमित्याशङ्कामुकारेण परिहर्तुमुकारस्यार्थमाह—अथेत्यादिना। अकारार्थकथनानन्तरमुकारार्थ उच्यत इत्यथशब्दार्थः। एषा मात्रा। उ एव। का सा मात्रेत्याह—उकार इति। स चोत्कृष्टतमार्थ उत्कर्षशब्दैकदेशत्वात्तस्योर्ध्वमुत्कृष्टत्वमाधिक्यं चोत्कर्षः। अनात्मसंबन्धित्वेना-ध्यस्तत्वेऽपि स्वरूपेणानध्यासाच्चोत्कृष्टत्वमसंसृष्टत्वमनध्यस्तत्वमूर्ध्वमुत्कृष्टत्व-माधिक्यं च तदेव। कोऽसावुत्कृष्टतमोऽर्थो यस्मिन्नुकारस्य वृत्तिरिति तत्राऽऽह—आत्मन्येवेति। देवादिरूपस्याऽऽत्मन एव सर्वाध्यक्षस्योक्तरूपो-त्कर्षसंभवात्स एवोकारार्थ इत्यर्थः। अतश्चोक्तशङ्कानिरवकाशेत्याह—तस्मादिति। यस्मादध्यासाध्यस्ताध्यक्षतया स्वरूपेणानध्यस्ततया वर्तते तस्मादुत्कृष्टत्वादेष एव सत्यस्वरूपो न त्वनात्मेत्यर्थः। अनात्मनोऽपि तर्हि संबन्धरूपेण चाध्यस्तत्वं स्वरूपतस्त्वात्मवदनध्यस्तपरमार्थसद्रूप एवानात्माऽपीति चेन्नेत्याह—न ह्यन्यदस्तीति। परमात्मासत्त्वाभावे हेतुमाह—अमेयमिति। अज्ञातत्वासंभवान्मानसंबन्धायोग्यत्वादित्यर्थः। ननु प्रमाणाविषयस्याप्यात्मनो

१ ङ. °वतीय°। २ क. घ. °हे ब्र°। ३ अ. °क्षस्योक्तया।

नात्मप्रकाशमेष हि स्वप्रकाशोऽसङ्गोऽन्यन्न वीक्षत आत्माऽतो नान्यप्रथाप्राप्तिरात्ममात्रं ह्येतदुत्कृष्टमेष एवोग्र एष ह्येवोत्कृष्ट एष एव वीर एष ह्येवोत्कृष्ट एष एव महानेष ह्येवोत्कृष्ट एष एव विष्णुरेष ह्येवोत्कृष्ट एष एव ज्वलन्नेष ह्येवोत्कृष्ट एष एव सर्वतोमुख एष ह्येवोत्कृष्ट एष एव नृसिंह एष ह्येवोत्कृष्ट एष एव भीषण एष ह्येवोत्कृष्ट एष एव भद्र एष ह्येवोत्कृष्ट एष एव मृत्युमृत्युरेष ह्येवोत्कृष्ट एष एव नमाम्येष

यथाऽस्तित्वं तद्वदनात्मनोऽप्यस्तीत्याशङ्क्यानात्मन आत्मनो वैषम्यमाह—अनात्मप्रकाशमिति । प्रमाणाविषयत्वेऽप्यात्मनः सिद्धिः संभवति स्वप्रकाशत्वान्न त्वनात्मनोऽस्वप्रकाशत्वादित्यर्थः । आत्मनोऽपि स्वप्रकाशत्वं नेति चेन्नेत्याह—एष हीति । सर्वसाधकस्य स्वप्रकाशत्वमभ्युपगन्तव्यमित्यर्थः । तर्हि स्वप्रकाश आत्माऽनात्मानं साधयत्विति चेन्नेत्याह—असङ्गोऽन्यन्न वीक्षत आत्मेति । असङ्गत्वादन्यन्न प्रकाशयत्यात्मेत्यर्थः । फलितमाह—अत इति । कथं तर्ह्यनात्मप्रतिभासो लोकस्येत्यात्मन्यध्यस्ततयाऽनात्मन आत्मव्यतिरेकेणाभावादात्मप्रथामेवानात्मप्रथां मन्यते लोक इत्याह—आत्ममात्रं हीति । अनात्मन एवाऽऽत्मन्यध्यस्तत्वे पूर्वोक्तं हेतुं स्मारयति—एतदुत्कृष्टमिति । एतदात्मतत्त्वं स्वतोऽनध्यस्तं हीत्यर्थः । अध्यस्तस्यापि द्वैतस्य यदि प्रतीतिः परिहर्तुं न शक्या तर्हि सभयत्वप्रतिभासोऽपि न परिहर्तुं शक्यः । न चानात्मनः कल्पितत्वं निश्चेतुं शक्यते तस्य व्यभिचारासिद्धेरित्ययमपि दोषो नास्ति यतोऽयमात्मा स्वाध्यस्तसर्वसंहारसमर्थ इत्याह—एष एवोग्र इति । उग्रत्वमेव कुत इति तदाह—एष ह्येवोत्कृष्ट इति । उकारस्य तावदेष एवाऽऽत्माऽर्थः । यत एष ह्येवोत्कृष्टो न चोक्तमुत्कृष्टत्वमुग्रत्वं सर्वसंहर्तृत्वमन्तरेण निश्चेतुं शक्यतेऽत एवोकार एवोग्रपदात्मा सन्नुग्रत्वमप्यात्मनो बोधयतीत्युकारस्योग्रपदात्मत्वमनेनोक्तम् । एवं वीरादिपदात्मत्वमप्यवगन्तव्यम् । उकारस्य संहारसमर्थत्वेऽपि मन्दप्रस्थानत्वान्न संहरति किंतु सर्वमप्यनर्थजातं सहत एवेत्याद्याशङ्कायामुत्तराण्यपि पदानि तत्तच्छङ्कानिवर्तकत्वेनोत्थाप्य

१ घ. °न्यप्रा° । ङ. °न्यथा° । २ अ. स्वतो नाध्य° ।

ह्येवोत्कृष्ट एष एवाहमेष ह्येवोत्कृष्टस्तस्मादात्मानमेवैवं जानीयादात्मैव नृसिंहो देवो ब्रह्म भवति य एवं वेद सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समव[1]नीयन्ते ब्रह्मैव सन्ब्रह्माप्येत्यथैषो एव मकारो महाविभूत्यर्थ आत्मन्येव नृसिंहे देवे परे ब्रह्मणि वर्तते तस्मादयमनल्पोऽभिन्न[2]रूपः स्वप्रकाशो ब्रह्मैव

तत्तत्पदार्थात्मत्वमात्मन्युकारार्थोत्कर्षान्यथानुपपत्त्या तत्तत्पदात्मकेनोकारेण साधनीयम् । एष वीर इत्यादिना । यस्मादुक्तप्रकारेणाऽऽत्मैव स्वतोऽनध्यस्तः सन्सर्वं संहरति तस्मादात्मानमेव परमार्थसत्यस्वरूपं जानीयादित्याह—तस्मादिति । एवंविदः फलमाह—आत्मैवेति । तत्साधयति—सोऽकाम इत्यादिना । एवमकारोकाराभ्यां ब्रह्मस्वरूपस्य वाक्यार्थ[3]योग्यस्य प्रत्यगात्मनः प्रतिपत्तिप्रकारमभिधाय मकारस्यार्थमाह—अथेति । कोऽसौ महाविभूत्याख्यो मकारार्थ इति प्रत्यग्रूपं ब्रह्मेत्याह—आत्मन्येवेति । देवपरशब्दाभ्यां मकारस्य तत्पदार्थवाचकत्वं सूचितम् । तत्पदार्थे हि देवत्वं परत्वं च प्रसिद्धम् । महाविभूतिपदे दृश्यमानोऽयं मकारो महाविभूतिपदात्मक एवेति महाविभूतिविशिष्टे ब्रह्मण्येव वर्तत इत्यर्थः। ननु ब्रह्मणः प्रत्यगात्मत्वे प्रत्यगात्मवद्ब्रह्मणोऽपि परिच्छेदादिप्रसक्तिरित्युक्तप्रत्यक्स्वरूपविस्मरणशीलस्य मतमाशङ्क्य ब्रह्माभेदात्प्रत्यगात्मनोऽप्यपरिच्छिन्नचैतन्यादिरूपत्वं किं न स्यादित्याह—तस्मादयमनल्प इति । तस्मात्परिपूर्णब्रह्मणः प्रत्यग्रूपत्वादयं प्रत्यगात्मा मन्दैः परिच्छिन्नत्वेन गृह्यमाणोऽपि परमार्थतोऽनल्प इत्यर्थः । उभयथाऽपि संभवे कस्तर्हि निर्णय इत्याशङ्क्य प्रत्यक्स्वरूपनिरूपणे तस्यापि ब्रह्मवत्परिच्छेदाद्यभावाच्च तदभेदेन ब्रह्मणोऽपि तत्प्रसङ्ग इति वदन्प्रत्यक्चैतन्यस्य सर्वत्रैकरूपत्वादौपाधिक्येव भेदप्रतीतिरित्याह—अभिन्नरूप इति । स्वयंप्रकाशस्याऽऽत्मनः परिच्छेदग्रहणानुपपत्तेश्चापरिच्छिन्नोऽयमित्याह—स्वप्रकाश इति। स्वप्रकाशत्वे च सर्वस्यापि ब्रह्मलक्षणस्य संभवान्निरूपितेन प्रकारेण ब्रह्मैवायमात्मेत्याह—ब्रह्मैवेति । साक्षादपरोक्षचिद्रूपत्वं तावत्स्व-

१ ग. ङ. 'वलीय' । २ क. ग. घ. 'प्रस्वरू' । ३ ग. 'क्यार्थान्वययो' ।

व्याप्ततम उत्कृष्टतम एतदेव ब्रह्मापि सर्वज्ञं महामायं महाविभूत्येतदेवोग्रमेतद्धि महाविभूत्येतदेव वीरमेतद्धि महाविभूत्येतदेव महदेतद्धि महाविभूत्येतदेव विष्ण्वेतद्धि महाविभूत्येतदेव ज्वलदेतद्धि महाविभूत्येतदेव सर्वतोमुखमेतद्धि महाविभूत्येतदेव नृसिंहमेतद्धि महाविभूत्येतदेव भीषणमेतद्धि महाविभूत्येतदेव भद्रमेतद्धि महाविभू-

---

प्रकाशत्वे सिध्यति नित्यापरोक्षस्याऽऽत्मनो नित्यसद्रूपत्वमपि सिध्यति । ततश्च सत्तास्फूर्त्योरन्यनिरपेक्षत्वेन स्वातन्त्र्यादनन्यशेषत्वेनाऽऽनन्दरूपत्वमपि सिध्यति । अन्यच्च ब्रह्मलक्षणत्वेन श्रूयमाणमेवं प्रतिपादनीयम् । आत्मन्यकारोकाराभ्यां यत्प्रत्यगात्मनो व्याप्ततमत्वमुत्कृष्टतमत्वं चोक्तं तदपि ब्रह्मरूपत्व एव संभवतीत्याह—व्याप्ततम उत्कृष्टतम इति । आप्ततमत्वमुत्कृष्टतमत्वं च ब्रह्मत्व एवेति पूर्वेण संबन्धः । एवं प्रत्यगात्मस्वरूपनिरूपणेन तस्य ब्रह्मत्वमभिधाय ब्रह्मस्वरूपलोचनायां ब्रह्माप्यात्मैवेत्याह—एतदेव ब्रह्मेति । ननु सर्वज्ञं सर्वशक्ति महाविभूतिसंपन्नं च ब्रह्म श्रूयतेऽतस्तन्निरूपणायां कथं तस्य तद्रहितप्रत्यग्रूपत्वमिति चेन्नायं दोषः । सर्वं जानातीत्यादिव्युत्पत्त्या सर्वज्ञत्वादीनां कल्पितजगत्सापेक्षत्वेन कल्पितत्वान्न तेषां परमार्थब्रह्मस्वरूपत्वं परमार्थब्रह्मस्वरूपस्य च प्रत्यग्रूपत्वमुच्यत इति न विरोधः । अथ सर्वं च तज्ज्ञं चेत्यादिव्युत्पत्त्या ब्रह्मणः सर्वज्ञत्वादिकमुच्यते तथाऽपि न विरोधो ब्रह्मणः प्रत्यक्त्वे प्रतीचोऽपि तथात्वादित्याह—अपि सर्वज्ञं महामायं महाभूतीति । एवंविधमपि ब्रह्माऽऽत्मैवोक्तयुक्त्येत्यर्थः । उक्तं च वार्तिककृद्भिः—"उक्तं कल्पितमेव स्यात्समानाधिकृतेस्तु वा" इति । सर्वं जानातीति सर्वज्ञमिति पक्षे तर्हि मायामयं जगदभ्युपगन्तव्यम् । पक्षान्तरेऽपि ज्ञशब्दव्यतिरेकेण सर्वशब्दप्रयोगाच्च सर्वमभ्युपगन्तव्यं[2] ततश्च मायामयस्यापि द्वितीयप्रतिभासस्य विद्यमानत्वात्तद्दुःखप्रतिभासोऽपि स्यादेवः ब्रह्मणः । न च महाविभूतिरूपत्वं देशतः कालतो वस्तुतश्चापरिच्छिन्नविभूतित्वं निर्णेतुं शक्यते । सर्वस्य मायामयत्वं च न निश्चेतुं शक्यत इति चेन्न । सर्वसंहारसमर्थत्वाद्ब्रह्मण इत्याह—एतदेवोग्रमिति । उग्रत्वमेव कुत इति तदाह—एतद्धि महाविभूतीति ।

---

१ ठ. °चनया ब्र° । २ म. °न्तव्यमतः स्वमा° ।

त्येतदेव मृत्युमृत्य्वेतद्धि महाविभूत्येतदेव नमाम्येतद्धि महाविभूत्येतदेवाहमेतद्धि महाविभूति तस्मादकारोकाराभ्यामिममात्मानमाप्ततममुत्कृष्टतमं चिन्मात्रं सर्वद्रष्टारं सर्वसाक्षिणं सर्वग्रासं सर्वप्रेमास्पदं सच्चिदानन्दमात्रमेकरसं

---

मकारस्य तावदेतदेव ब्रह्मार्थः । यत एतदेव महाविभूति । न चोक्तं महाविभूतित्वमुग्रत्वं सर्वसंहर्तृत्वमन्तरेण निश्चेतुं शक्यमतो मकार एवोग्रपदात्मा सन्नुग्रत्वमपि ब्रह्मणो बोधयतीति मकारस्योग्रपदात्मत्वमनेनोक्तम् । एवं वीरादिपदात्मत्वमप्यवगन्तव्यम् । मकारस्य सर्वसंहारसमर्थत्वेऽपि न संहरतीत्याद्याशङ्कायामुत्तराण्यपि पदानि तन्निवर्तकत्वेनोत्थाप्य तत्तत्पदार्थात्मत्वं ब्रह्मणि मकारार्थे महाविभूत्यन्यथानुपपत्त्या तत्तत्पदात्मकत्वेन मकारेण साधनीयमेतदेव वीरमित्यादिना । एवं पदार्थद्वयमितरेतरपर्यवसितं संशोध्योक्तमेवार्थमनुवदन्सामानाधिकरण्यसिद्धमेकत्वलक्षणवाक्यार्थमाह—तस्मादित्यादिना । यस्मादेवं प्रत्यग्ब्रह्मणोरेकत्वमविरुद्धं तस्मादकारोकाराभ्यामिमं प्रत्यगात्मानमन्विष्य प्रतिपद्य मकारेण ब्रह्म जानीयादित्युत्तरेणान्वयः । इममित्युक्तमात्मानं विशिनष्टि तस्य ब्रह्मणैकत्वयोग्यताप्रदर्शनार्थम्—आप्ततममुत्कृष्टतममिति । आप्ततमोत्कृष्टतमत्वयोः सर्वाधिष्ठानसन्मात्रत्वं हेतुमाह—चिन्मात्रमिति । द्रष्टृदृश्यान्वयव्यतिरेकेण चिद्रूपत्वं साधयति—सर्वद्रष्टारमिति। द्रष्टृत्वं नाम दर्शनक्रियाकर्तृत्वम् । अतः कथं चिन्मात्रत्वमित्याशङ्क्य साक्षिसाक्ष्यान्वयव्यतिरेकेण सर्वविक्रियानिरासेन चिन्मात्ररूपत्वमाह—सर्वसाक्षिणमिति । साक्षात्क्रियाव्यवधानमन्तरेण स्वात्मनैव सर्वमीक्षत इति साक्षी ततश्चिन्मात्ररूपत्वं सिद्धम् । अथ साक्षिणः साक्ष्यसद्भावेन प्राप्तं सद्वितीयत्वं परिहरन्सद्रूपत्वमानन्त्यं चाऽऽगमापायितदवध्यन्वयव्यतिरेकेणाऽऽह—सर्वग्रासमिति । आगमापायवतां कल्पितानां जाग्रदादीनां साक्ष्यरूपाणां सर्वकल्पनाधिष्ठानादिरूपसच्चिन्मात्रात्मव्यतिरेकेणासत्त्वात्सर्वसंहर्तारमित्यर्थः । अथास्य पुरुषार्थरूपत्वाय दुःखिप्रेमास्पदान्वयव्यतिरेकमाश्रित्य परमानन्दरूपत्वमाह—सर्वप्रेमास्पदमिति । परप्रेमास्पदत्वात्परमानन्दरूपत्वमित्यर्थः । अन्वयव्यतिरेकचतुष्टयसिद्धं फलं स्वयमेवाऽऽह—सच्चिदानन्दमात्रमेकरसमिति । सन्मात्रं चिन्मात्रमानन्दमात्रमिति मात्रपदं प्रत्येकमभिसंबन्धनीयम् । सदादिषु स्वगतभेदनिरासाय सदादीनां परस्परभेदाभावादैकरस्यमुक्तम् । ऐकरस्यं युक्तितः

पुरतोऽस्मात्सर्वस्मात्सुविभातमन्विष्याऽऽप्ततममुत्कृष्टतमं चिन्मात्रं[1] महाविभूति सच्चिदानन्दमात्रमेकरसं परमेव ब्रह्म मकारेण जानीयादात्मैव नृसिंहो देवः परमेव ब्रह्म भवति य एवं वेद सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते[2] ब्रह्मैव सन्ब्रह्माप्येतीति ह प्रजापतिरुवाच ॥

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीये षष्ठोपनिषदि
पञ्चमः खण्डः ॥ ५ ॥

साधयति सदादीनाम्—पुरतोऽस्मादिति । अर्थस्त्वस्य मात्राखण्डोक्तमकारेण द्रष्टव्यः । एवं ब्रह्मलक्षणलक्षितमात्मानमन्विष्य प्रतिपद्य किं कार्यमित्यत आह—आप्ततममित्यादिना । आप्ततममित्यादिकं ब्रह्मणो विशेषणं प्रत्यगात्मनोऽपि ब्रह्मरूपत्वेन ह्याप्ततमत्वादिकमुक्तम् । अतः प्रत्यगात्मन्युक्तमेवाऽऽप्ततमत्वादिकं ब्रह्मणो विशेषणत्वेनोच्यते तयोरत्यन्तैक्यप्रदर्शनाय । पूर्वमेवाकारोकाराभ्यामुक्तलक्षणमात्मानमन्विष्य मकारेण चोक्तरूपब्रह्मन्विष्य सामानाधिकरण्येन तयोरेकत्वमोमिति जानीयादित्यर्थः । एवं ब्रह्मात्मैकत्वविदः फलमाह—आत्मैवेत्यादिना । पूर्वत्रापि पदार्थज्ञानस्येदमेव फलमनूदितं वाक्यार्थज्ञानपर्यन्तत्वात्पदार्थज्ञानस्य । इह तु परमेव ब्रह्म भवतीति विशेषो दर्शितः । यद्यपि वाक्यार्थपर्यन्तमेव पदार्थज्ञानमपीति पदार्थज्ञानेनापि ब्रह्मत्वं कथंचित्संभाव्यते तथाऽपि पदार्थज्ञानमात्रस्याज्ञाननिवर्तकत्वाभावादपरब्रह्मात्मत्वमपि भात्येव तत्रेह तु वाक्यात्मना प्रणवेन परब्रह्मण्यात्मतया ज्ञाते तेनाज्ञानकार्यत्वा[illegible]त्मत्वे निवृत्ते स्वतः परमेव ब्रह्म भवतीत्ययं विशेषः परशब्दप्रयोगादवसीयते । इति ह प्रजापतिरुवाचेति विद्यां स्तौति श्रुतिः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्रीमद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीये षष्ठोपनिषदि
पञ्चमः खण्डः ॥ ५ ॥

---

१ क. °त्रं महामायं म° । २ ग. ङ. °वलीय° ।

ते देवा इममात्मानं ज्ञातुमैच्छंस्तान्हाऽऽसुरः पाप्मा परिजग्रास त ऐक्षन्त हन्तैनमासुरं पाप्मानं ग्रसाम इति त एतमेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानमुग्रमनुग्रं वीरमवीरं महान्तममहान्तं विष्णुमविष्णुं ज्वलन्तमज्वलन्तं सर्वतोमुखमसर्वतोमुखं नृसिंहमनृसिंहं भीषणमभीषणं भद्रमभद्रं मृत्युमृत्युममृत्युमृत्युं नमाम्यनमाम्यहमनहं नृसिंहानुष्टुभैव बुबुधिरे तेभ्यो हासावासुरः

अथ मन्दमध्यमोत्तमाधिकारिभेदेन स्वरूपप्रतिपत्तिसाधनभेदं विधातुं खण्डान्तरमारभते— ते देवा इति । तत्र मन्दानां सप्रणवनृसिंहानुष्टुब्निष्ठा प्रथमतः कार्येति सेतिहासमाह— ते देवा इति । ते देवा एवं प्रजापतिनाऽनुशिष्टा इमं यथोपदिष्टं ब्रह्मात्मानं ज्ञातुमैच्छन् । ज्ञानसाधनं ध्यानादिकं कर्तुमुपक्रान्तवन्त इत्यर्थः । उपक्रममात्र एव च तान्देवान्हाऽऽसुरः पाप्मा विषयासङ्गाविवेकपरिच्छेदाभिमानादिलक्षणो बहिर्मुखैः प्राणैरसुरैः क्षिप्तः पाप्मा परि समन्ततो जग्रास कवलीकृतवान् । अन्तःकरणशुद्ध्यभावाद्विषयासङ्गादिकं बाहुल्येनाभूदित्यर्थः । ते देवा एवं पाप्मना ग्रस्यमाना अपि समस्तग्रासात्पूर्वमेवावगतसाधनैः किंचिच्छुद्धान्तःकरणत्वादैक्षन्ताऽऽलोचनं कृतवन्तः । कथमिति । तदाह । हन्तेदानीमेनमस्मत्पुरुषार्थविरोधिनमासुरं पाप्मानं ग्रसामः स्वात्मानुसंधानेन तावन्मात्रतया संहराम इत्यर्थः । एवमीक्षित्वा किं कृतवन्त इत्याह—त एतमेवेत्यादिना । त एतमेवोंकाराग्रमात्रविद्योतं तुरीयतुरीयमात्मानं नृसिंहानुष्टुभैव बुबुधिर इत्युत्तरत्रान्वयः । कथंभूतमात्मानमित्याह—उग्रमनुग्रमित्यादिना । उग्रमिति वाक्यजन्ये वृत्त्यभिव्यक्तस्य तुरीयस्य सर्वसंसारसंहर्तृत्वमुच्यते । अनुग्रमिति तदाऽपि परमार्थतः स्वमहिमस्थतया कूटस्थत्वेन परमार्थतोऽकर्तृत्वमुच्यते । अथवाऽनुग्रमित्ययमर्थः । उग्रत्वं नाम न धर्मः किंतु स्वरूपमेवेति । एवं वीरमवीरमित्यादिकमपि योज्यम् । चतुर्मात्रमोंकारमुच्चार्य तुरीयतुरीयक्रमेण प्रतिपद्य तमेव तुरीयं नृसिंहानुष्टुभा च पुनः पुनर्ध्यातवन्त इत्यर्थः । एवं तुरीयध्याने प्रवृत्तानामासुरः पाप्मा विनष्ट इत्याह—तेभ्य इति । तेषां परिच्छेदको योऽसावा-

२ क. ग. घ. °नं पप्रि° ।

पाप्मा सच्चिदानन्दघनं ज्योतिरभवत्तस्मादप-क्वकषाय इममेवोंकाराग्रविद्योतं तुरीयतुरीय-मात्मानं नृसिंहानुष्टुभैव जानीयात्तस्याऽऽसुरः पाप्मा सच्चिदानन्दघनं ज्योतिर्भवति ते देवा ज्योतिष उत्तितीर्षवो द्वितीयाद्भयमेव पश्यन्त इममेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानं नृसिंहानुष्टुभाऽन्विष्य प्रणवेनैव तस्मिन्नवस्थि-तास्तेभ्यस्तज्ज्योतिरस्य सर्वस्य पुरतः सुविभा-

सुरः पाप्मा पूर्वमभूत्स तुरीयध्यानवशात्किंचिदन्तर्मुखचित्ते सति सच्चिदानन्द-घनं कारणात्मकं ज्योतिरभवत् । सद्रूपस्य हि कारणात्मनोऽनृतादिविरुद्धात्म-रूपाभासविशिष्टत्वेन सच्चिदानन्दरूपत्वमस्तीति पूर्वमेवोक्तमतः कार्यरूपपरि-च्छिन्नात्मतां संहृत्य कारणात्मतां प्राप्ता देवा इत्यर्थः । तस्माद्देववदन्येनापि मन्देन प्रथमत एवमेव प्रतिपत्तव्यमित्याह—तस्मादिति । तस्याप्युक्तफलप्राप्ति-माह—तस्येति । एवं मन्दानां भगवान्तेन मन्त्रराजेन तुरीयप्रतिपत्तिमभिधाय तेषामेव मध्यमावस्थां प्राप्तानां कंचित्कालं मन्त्रराजेन तुरीयं संचिन्त्य चित्तेऽ-भिज्वलिते प्रणवेनैव तुरीयः प्रतिपत्तव्य इत्याहाऽऽख्यायिकाद्वारेण—ते देवा इति । त एवं कारणात्मकज्योतिरात्मतां प्राप्ता अन्तःकरणशुद्ध्यतिशयात्कार-णात्मकज्योतिषोऽप्युत्तितीर्षवः कारणात्मत्वमप्यतिक्रम्य तुरीयात्मत्वकामा इत्यर्थः । उत्तितीर्षव आत्मानमनुष्टुभाऽन्विष्य प्रणवेनैव तस्मिन्नवस्थिता इत्यु-त्तरत्रान्वयः । ज्योतिष उत्तितीर्षुत्वे कारणमाह—द्वितीयादिति । ते पुनस्त-त्साधनत्वेन किं कृतवन्त इत्याह—इममेवेति । सर्वसाधकतया सर्वेषां प्रत्यक्षमे-वेत्यर्थः । अनुष्टुभा कंचित्कालमन्विष्य पुनर्विक्षेपनिवृत्त्यर्थं तां परित्यज्य प्रण-वेनैव केवलेन तस्मिन्नात्मन्यवस्थिता इत्यर्थः । उक्तं च—'विक्षेपविनिवृत्त्यर्थं तदेतद्भण्यते मया' इति । तुरीयप्रणवकथनमप्यक्षरभेदतदर्थचिन्ताविक्षेपनि-वृत्त्यर्थमेव । एवं प्रणवेन तुरीयप्रतिपत्तिबलाद्देवानां बीजात्मा तुरीये लीयत इत्याह—तेभ्य इत्यादिना । तेभ्यस्तत्कारणात्मकं ज्योतिरस्य सर्वस्य कार्यका-रणात्मकस्य जगतः पुरतः पूर्वमेव तत्साधकत्वेन सुविभातं स्वयंप्रकाशत्वात् । अविभातमविषयत्वात् । सर्वस्य पुरत इत्युक्ते पुरतः सर्वसत्त्वशङ्कायामाह—

१ ट. 'क्षमित्य' ।

तमविभातमद्वैतमचिन्त्यमलिङ्गं स्वप्रकाशमानन्दघनं शून्यमभवदेवंवित्स्वप्रकाशं परमेव ब्रह्म भवति ते देवाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय[१] निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्तमानाः

अद्वैतमिति। अविभातत्वे स्वयमेव हेतुमाह—अचिन्त्यमलिङ्गमिति। सुविभातत्वे हेतुमाह—स्वप्रकाशमिति। तस्य स्वत एव पुरुषार्थरूपत्वमाह—आनन्दघनमिति। आनन्दस्य लोके सातिशयत्वादिना प्राप्तं सविशेषत्वं निराचष्टे—शून्यमिति। देववदन्यस्याप्येवंविद एतदेव फलमाह—एवंविदित्यादिना। अथोत्तमानां सर्वकर्मसंन्यासपूर्वकं प्रणवेनैव तुरीयावस्थानं कर्तव्यमित्याह—ते देवा इत्यादिना। एवं प्रणवद्वारेण तुरीयनिष्ठा योग्यतां प्राप्तास्ते देवाः पुत्रैषणायाश्चैतल्लोकजयसाधनपुत्राद्यर्थप्रवृत्त्यादेर्वित्तैषणायाश्च नित्यनैमित्तिककर्मादेर्लोकैषणायाश्च लोकार्थकाम्यकर्मादेश्च ससाधनेभ्यः साधनसहितेभ्य उक्तेभ्यः कर्मभ्यो व्युत्थायेति ससाधनानां सर्वेषां कर्मणां संन्यासोऽभिहितः। एवं संन्यस्तसर्वसाधनानां वर्तनप्रकारमाह—निरागारा इत्यादिना। निरागारा वासार्थे नियताश्रयरहिताः। निष्परिग्रहा देहयात्रामात्रसाधनातिरिक्तपरिग्रहरहिताः। अशिखाः शिखारहिताः। अयज्ञोपवीता यज्ञोपवीतरहिता इति ससाधनैषणात्यागाभिधानेनैव सिद्धस्य शिखायज्ञोपवीतत्यागस्य पुनर्वचनेन परमहंसवृत्तावादरो दर्शितः। त्यक्तसर्वैषणानामपि जीवनबलात्प्राप्तविषयेन्द्रियसांनिध्ये तत्र तद्विषयरागद्वेषपरिहारेणाविकृततया सुप्तवद्वर्तनं कार्यमित्याह—अन्धा इत्यादिना। सर्वेन्द्रियविषयसांनिध्येऽप्यविकृता इत्यर्थः। अन्धाश्चक्षूरहिताः। बधिराः श्रोत्ररहिताः। मुग्धा अप्ररूढमनसः। क्लीबाः प्रजननसामर्थ्यरहिताः। मूका वागुच्चारणसामर्थ्यरहिताः। उन्मत्ता इव। इवशब्दोऽन्धादिपदेनापि योज्योऽन्धा इवेत्यादिक्रमेण। यथोन्मत्तो न कस्यचिदप्युपादेयस्तथा सर्वैरनुपादेयः। जडोन्मत्तपिशाचवच्छास्त्रोक्तक्रमेण परिवर्तमानाः परितो गच्छन्त इत्यर्थः। एवं सर्वबाह्यविषयपरित्यागाद्विषयरागद्वेषपरित्यागा-

१ क. ग. घ. °य निरहंकारा निरा°।

शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना आत्मानन्दाः प्रणवमेव परमं ब्रह्माऽऽत्मप्रकाशं शून्यं जानन्तस्तत्रैव

दिकं चाभिधाय तदुपायत्वेन शान्त्यादिकं कर्तव्यमित्याह—शान्ता इत्यादिना शान्ता उपरतबाह्येन्द्रिया निरुद्धेन्द्रियबहिष्प्रसरा इत्यर्थः । दान्ता उपरतान्तःकरणा निरुद्धबहिष्प्रसरान्तःकरणा इत्यर्थः । अन्तःकरणोपरतौ विषयसंकल्पादिवर्जनं साधनमाह—उपरता इति । असंकल्पितस्यापि शीतोष्णादिद्वंद्वस्य प्राप्तौ तत्सहिष्णुत्वं कार्यमित्याह—तितिक्षव इति । उक्तानां शान्त्यादीनां साधकं परममुपायमाह—समाहिता इति । बाह्यान्तःकरणगणमन्तर्मुखमेकीकृत्य सर्वद्वैतजातविस्मरणपूर्वकं तत्साक्ष्यनुसारेणावस्थानं समाधानं नाम। एतदेव समाधानं साध्यं साधनं च भवति । आत्मनि चित्तसमाधानमेव हि पूर्णसमाधिलाभसाधनम् । तस्यैवं समाधाने प्रवृत्तस्य पूर्णसमाधिलाभाय साधनमाह—आत्मरतय इत्यादिना । रतिरिष्टेऽन्नादिविषये मनसः प्रावण्यं प्रीतिः । अयमर्थः । यदा समाहितचित्तस्यापि क्षुधादिवशादन्नरसादिसाध्यसुखेच्छया मनश्चलनाभिमुखं भवति तदा तत्सुखस्याप्यात्मस्वरूपपरमानन्दान्तर्भावसमाधानपूर्वकं परमानन्दरूपे साक्षिण्येव ततो नियमितव्यमिति । रतिरन्नलाभादिनिमित्तं सुखं तदात्मन्येव येषां त आत्मरतयः। एवमुत्तरमपि योज्यम् । क्रीडा सख्यादिमेलनाभिव्यक्तं सुखं विवक्षितं तत्साधनभूता हि क्रीडा । मिथुनमिति मिथुनसाध्यं सुखमानन्द इति सामान्यसुखमात्रं विवक्षितम् । एवं समाधिनिष्ठानां शुद्धान्तःकरणानां सम्यग्ज्ञानोदयो भवतीत्याह —प्रणवमेवेत्यादिना । प्रणवमेवैवशब्देनानुष्टुभोऽपि त्यागोऽभिहितः । प्रणवमिति च ब्रह्मैवोच्यते प्रणतमवतीति । न हीतरस्याक्षरात्मकस्य परब्रह्मणा सामानाधिकरण्यं संभवति । ब्रह्मचैतन्यमेव नामरूपोपाधिद्वारा वाच्यवाचकरूपप्रणवात्मतां प्राप्तमिति च ब्रह्मणि परब्रह्मशब्दो युक्तः शब्दान्तरेभ्यश्चास्य सारत्वमेतद्गतवर्णत्रयस्य सर्ववर्णतदर्थकवलनरूपत्वादिनाऽवगन्तव्यम् । जानन्त इति वचनेन प्राप्तज्ञेयत्वं परिहरति—आत्मप्रकाशमिति । स्वयंप्रकाशमित्यर्थः । स्वयंप्रकाशत्वादिधर्मवत्त्वं व्यावर्तयति—शून्यमिति । निर्विशेषमित्यर्थः । ब्रह्मज्ञानफलं ब्रह्मात्मत्वं दर्शयति—तत्रैवेति । यस्माद्देवा उक्तसाधनेन ब्रह्म विज्ञाय मुक्तास्तस्मादन्येना-

१ ङ. परं ।

परिसमाप्तास्तस्माद्देवानां व्रतमाचरन्नोंकारे परे ब्रह्मणि पर्यवसितो भवेत्स आत्मनैवाऽऽत्मानं परमं ब्रह्म पश्यति तदेष श्लोकः—शृङ्गेष्वशृङ्गं संयोज्य सिंहं शृङ्गेषु योजयेत् । शृङ्गाभ्यां शृङ्गमाबध्य त्रयो देवा उदासत इति ॥

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीये षष्ठोपनिषदि
षष्ठः खण्डः ॥ ६ ॥

---

प्येतदेव वेदनसाधनमनुष्ठेयमित्याह—तस्मादिति । सर्वकर्मसंन्यासपूर्वकं प्रणवेनाऽऽत्मनिष्ठा देवानां व्रतं तस्य देववदेव ब्रह्मज्ञानपूर्वकं ब्रह्मण्यवस्थानं फलमाह—स आत्मनैवेति । स यथोक्तसाधनवानात्मनैव प्रत्यगात्मस्वरूपेणैव ब्रह्म पश्यति । ततश्चाज्ञाननिवृत्तौ स्वात्मन्येव ब्रह्मण्यवतिष्ठत इत्यर्थः । खण्डद्वयोक्तेऽर्थे श्लोकमवतारयति—तदेष इति । तत्तत्रोक्तेऽर्थे एष श्लोको मन्त्रो भवति । शृङ्गेषु च्छन्दसामृषभस्य प्रणवस्य शृङ्गेषु मात्रास्वकारोकारमकारेष्वित्यर्थः । अशृङ्गममात्रं निरवयवं तुरीयमात्मानं संयोज्य वाच्यतया संधायाकारोकाराभ्यां त्वंपदार्थरूपं मकारेण तत्पदार्थरूपं च प्रतिपद्येत्यर्थः । सिंहं नृसिंहानुष्टुभं तुरीयगतसर्वसंहर्तृत्वादिवाचकं शृङ्गेष्वकारादिषु तत्त्वंपदार्थरूपात्मवाचकेषु तद्गतसर्वसंहर्तृत्वादिवाचकत्वाय योजयेत् । अन्तर्भूतं भावयेदित्यर्थः । एवं पदार्थशोधनं विधाय शृङ्गाभ्यामकारोकाराभ्यां तदर्थप्रत्यगात्मरूपेणेत्यर्थः शृङ्गं मकारं तदर्थं ब्रह्मेत्यर्थः । आबध्याऽऽभीक्ष्णेनाऽऽत्यन्तैकत्वेन संयोज्य प्रतिपद्येत्यर्थः । इति पञ्चमखण्डार्थ उक्तः । षष्ठखण्डार्थमाह—त्रयो देवा इति । त्रयो देवा इति मन्दमध्यमोत्तमभेदेन तदूर्ध्वं सर्वसंहारमतिक्रम्य तदूर्ध्वमासते सर्वेषां हि देवानां तुरीयप्रतिपत्तेर्विद्यमानत्वादुदासनं न विरुध्यते । तुरीयप्रतिपत्तेश्चलत्वचलाचलस्वाचलत्वकृतस्तु विशेषः । साधनवैशिष्ट्यावैशिष्ट्यनिमित्तश्च ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्रीमद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीये षष्ठोपनिषदि
षष्ठः खण्डः ॥ ६ ॥

---

१ ट. देवान ऊर्ध्वं ।

देवा ह वै प्रजापतिमब्रुवन्भूय एव नो भगवान्विज्ञापयत्विति तथेत्यजत्वादमरत्वादजरत्वादमृतत्वादभयत्वादशोकत्वादमोहत्वादनशनायत्वादपिपासत्वादद्वैतत्वाच्चाकारेणेममात्मानमन्विष्यो*दुत्कृष्टत्वादुदुत्पादकत्वादुदुत्प्रवेष्टृत्वादुदुत्थापयितृत्वादुदुद्द्रष्टृत्वादुदुत्कर्तृत्वादुदुत्पथवारकत्वादुदुद्ग्रासकत्वादुदुद्भ्रान्तत्वादुदुत्तीर्णवि-

अथ प्रणवेन ब्रह्मात्मनोर्व्यतिहारेण प्रतिपत्तिप्रकारप्रदर्शनाय खण्डान्तरमारभते—देवा इति । भेदाभेदशङ्कानिरासेनात्यन्तैक्यप्रतिपत्त्यर्थं तत्प्रकारं भूय एव भगवान्नो विज्ञापयत्विति देवैः प्रार्थित ओमित्यनुजानाति प्रजापतिः—तथेति । तत्रैकेन प्रणवेन व्यतिहारप्रतिपत्तयेऽकारस्य प्रत्यगर्थत्वमुकारपूर्वोत्तरार्धयोर्ब्रह्मार्थत्वं मकारस्य पुनरपि प्रत्यगर्थत्वं च वदन्नकारेण प्रत्यक्प्रतिपत्ताबकारप्रतीचोर्वाच्यवाचकभाव उपपत्तिमाह—अजत्वादिना । आत्मा तावदजत्वगुणविशिष्टस्तथाविधात्मवाचकोऽयमजशब्दस्तस्य शब्दस्याऽऽदिभूतोऽयं प्रणवस्थोऽकारस्तस्मादजशब्द एव सः । तस्मादजत्वगुणविशिष्टप्रत्यगात्मवाचकोऽयमकार एवममरत्वादिरूपात्मवाचकत्वमप्यकारस्य द्रष्टव्यम् । तत्राऽऽद्येन चतुष्टयेन देहधर्मा निषिद्धाः । ततस्त्रयेण बुद्धिधर्माः । ततो द्वाभ्यां प्राणधर्मौ । तत एकेन सामान्येन सर्वे धर्मा निषिद्धा इति विभागः । अन्विष्येत्यादिपदानामेकीकुर्यादित्युत्तरत्रान्वयः । एवं लक्षणयाऽकारस्य शुद्धप्रत्यगर्थतामभिधायोकारोच्चारणसमये किंचिद्दीर्घतया मात्राद्वयविशिष्टस्योकारस्य ब्रह्मार्थत्वे युक्तिमाह—उदुत्कृष्टत्वादित्यादिना । उत्कृष्टत्वधर्मादुत्कृष्टत्वे सत्युत्कृष्टत्वमुदुत्कृष्टत्वम् । उदुत्पादकत्वादिकमप्येवं द्रष्टव्यम् । उत्कृष्टत्वं सर्वसंसारधर्मवर्जितत्वं ब्रह्मणः सर्वज्ञत्वादिविशिष्टत्वं चोत्पादकत्वं सर्वस्रष्टृत्वं ब्रह्मरूपेण सृष्टे जगति जीवरूपेण प्रवेष्टृत्वं तन्नियन्तृरूपेण स्थापयितृत्वं विष्णुरूपेण प्रविष्टस्य द्रष्टृत्वं कर्तृत्वं च बुद्धिप्राणोपाधितयोत्पथवारकत्वं नियन्तृत्वमीश्वररूपेणोद्ग्रासकत्वं सर्वसंहर्तृत्वं रुद्ररूपेणोद्भ्रान्तत्वं व्याप्तत्वं कारणात्मनादुत्तीर्णविकृतित्वं साक्ष्यात्मना । अयमर्थः । ब्रह्म तावदुत्कृष्टत्वादिगुणवि-

* एतदारभ्योदुत्तीर्णेत्यन्तं सर्वशब्देषु ङ. पुस्तकातिरिक्तादर्शपुस्तकेष्वेक एवोदुपलभ्यते ।

१ क. ङ. 'मरत्वा' ।

कृतित्वाच्चोकारेण परमं सिंहमन्विष्याकारमिममात्मानमुकारपूर्वार्धमाकृष्य सिंहीकृत्योत्तरार्धेन तं सिंहमाकृष्य महत्त्वान्महस्त्वान्मानत्वान्मुक्तत्वान्महादेवत्वान्महेश्वरत्वान्महासत्त्वान्महाचित्त्वान्महानन्दत्वान्महाप्रभुत्वाच्च मकारार्थेनानेनाऽऽत्मनैकी कुर्यादशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड्भवति य एवं वेद कस्त्वमित्यहमिति

---

शिष्टं तथाविधब्रह्मवाचकाश्चैत उत्कृष्टादिशब्दास्तेषामादिभूतश्चायं प्रणवस्थ उकारो द्विमात्रः। तस्मादुदुत्कृष्टादिशब्दरूप एव सः। तस्मादुत्कृष्टत्वादिगुणविशिष्टब्रह्मवाचकोऽसाविति। एवमकारस्य प्रत्यगर्थत्वमुकारस्य ब्रह्मार्थत्वं चाभिधाय तयोः सामानाधिकरण्यरूपवाक्येन जीवस्य तावद्ब्रह्मणैक्यमाह—अकारमित्यादिना। अकारमिममकारार्थमिमं प्रत्यगात्मानमुकारपूर्वार्धमुकारपूर्वार्धार्थब्रह्माऽऽकृष्य। ब्रह्म प्रत्याकृष्येत्यस्यार्थमाह—सिंहीकृत्येति। ब्रह्मणैक्यं प्रतिपद्येत्यर्थः। अथोकारोत्तरार्धस्य ब्रह्मणः प्रत्यगात्मनैक्यं वक्तुमारभते—उत्तरार्धेनेत्यादिना। उत्तरार्धेनोकारस्योत्तरमात्रया तं सिंहं पूर्वोक्तं ब्रह्माऽऽकृष्याऽऽदाय मकारार्थेनानेन प्रत्यगात्मनैकीकुर्यादित्युत्तरत्रान्वयः। मकारस्य ब्रह्मणैकत्वयोग्यप्रत्यगर्थत्वमुपपादयति—महत्त्वादित्यादिना। महत्त्वं व्याप्तत्वं महस्त्वं चित्तेजोरूपत्वं मानत्वं सर्वसाधकप्रमाणरूपत्वं मुक्तत्वमपारवश्यत्वं महादेवत्वं महाक्रीडारसिकत्वादिधर्मविशिष्टत्वम्। महेश्वरत्वं सर्वनियन्तृत्वं महासत्त्वादिकमपरिच्छिन्नसच्चिदानन्दरूपत्वं महाप्रभुत्वं स्वसंनिधिसत्तामात्रेणैव सर्वप्रवर्तकत्वम्। अयं भावः। आत्मा तावन्निरुपचरितमहत्त्वादिगुणविशिष्टस्तथाविधात्मवाचकास्त्वेते महदादयः शब्दास्तेषामादिभूतश्चायं प्रणवस्थो मकारस्तस्मान्महदादिशब्दात्मक एव सः। तस्मात्तद्गुणविशिष्टप्रत्यगात्मवाचकोऽसाविति। अशरीर इत्यादिना विद्याफलमाह। तमः कारणम्। अशरीरादिपदलक्षितस्य स्वराजः स्वरूपमाह—सच्चिदानन्दमात्र इति। मात्रशब्देन सजातीयादिभेदो निरस्तः। एवं विक्षेपनिरासायैकेन प्रणवेन व्यतिहारप्रतिपत्तिमभिधायेतः पूर्वमेव द्वाभ्यां प्रणवाभ्यां व्यतिहारप्रतिपत्तिप्रकारदर्शनायाऽऽरभते—कस्त्वमित्यादिना। तत्राकारस्याहंशब्दादित्वेनाहंशब्दरूपतामापाद्य तस्य प्रत्यगर्थतां

होवाचैवमेवेदं सर्वं तस्मादहमिति सर्वाभि-
धानं तस्याऽऽदिरयमकारः स एव भवति सर्वं
ह्ययमात्माऽयं हि सर्वान्तरो न हीदं सर्वं निरा-
त्मकमात्मैवेदं सर्वं तस्मात्सर्वात्मकेनाकारेण
सर्वात्मकमात्मानमन्विच्छेद्ब्रह्मैवेदं सर्वं सच्चिदा-
नन्दरूपं सच्चिदानन्दरूपमिदं सर्वं सद्धीदं सर्वं

वक्तुमहंशब्दस्य सर्वात्मकप्रत्यगर्थत्वं साधयितुमाह—कस्त्वमित्यादिना। कस्त्व-मिति कश्चित्केनचित्पृष्टोऽहमिति प्रथममुत्तरमुवाचेत्यर्थः। नैकस्यैवमुत्तरं भवति किं तु सर्वमेव प्राणिजातं कस्त्वमित्युक्तेऽहमित्येवोत्तरं प्रतिपद्यत इत्याह—एवमेवेदं सर्वमिति। ततः किमिति चेदहंशब्दस्य सर्ववाचकत्वं सिद्धमित्याह—तस्मादिति। भवत्वेवमहंशब्दस्य सर्ववाचकत्वं तेनाकारस्य प्रत्यगर्थत्वे किमा-यातमित्याशङ्क्याकारस्याप्यहंशब्दरूपत्वेन तद्वत्सर्ववाचकत्वं तावदेष्टव्यमि-त्याह—तस्याऽऽदिरिति। तस्याहंशब्दस्याऽऽदिभूतोऽयमकारः प्रणवस्थः स एव सर्ववाचकोऽहंशब्द एव भवति। ततोऽप्यस्याऽऽत्मार्थत्वे किं जातमित्या-शङ्क्य यस्मादात्मन एव सर्वत्वं कृत्स्नत्वं पूर्णत्वमद्वयत्वं संभवति तस्मात्सर्ववा-चकोऽयमकार आत्मार्थ एवेति वक्तुमात्मनः सर्वत्वं तावत्प्रतिजानीते—सर्वं हीति। आत्मनः सर्वत्वं साधयति—अयं हीति। सर्वान्तरत्वमपि साधयति—न हीति। सर्वस्य सात्मकत्वे सर्वमात्मेति च वस्तुद्वये सति कथमात्मनः सर्व-त्वमित्याशङ्क्याऽऽत्मव्यतिरेकेण सर्वं नास्तीत्याह—आत्मैवेदं सर्वमिति। सर्वस्याऽऽत्मनि कल्पितत्वात्तद्व्यतिरेकेण तन्नास्तीत्यर्थः। अतः सर्वशब्दात्म-कस्याकारस्य सर्वात्मकप्रत्यगात्मवाचकत्वं सिद्धम्। अतस्तथाविधेनाकारेण तथाविध आत्मा प्रतिपत्तव्य इत्याह—तस्मादिति। मकारस्य ब्रह्मशब्दा-न्त्यत्वेन ब्रह्मशब्दत्वमापद्य ब्रह्मवाचकत्वं दर्शयितुं ब्रह्मस्वरूपं दर्शयन्प्रत्यगा-त्मवत्तस्यापि सर्वात्मत्वं दर्शयति—ब्रह्मैवेदमित्यादिना। ब्रह्मणः स्वरू-पमाह—सच्चिदानन्दरूपमिति। कथं तर्ह्यसच्चिदानन्दरूपस्य जगतः सच्चिदान-न्दरूपात्मत्वं युक्तमित्याशङ्क्य जगतोऽपि सच्चिदादिरूपत्वमाह—सच्चिदान-न्दरूपमिदं सर्वमिति। तत्र जगतः सद्रूपत्वं तावत्प्रसिद्धमित्याह—सद्धीति।

१ घ. ङ. छ. °वं सत्स° ।

तत्सदिति चिद्धीदं सर्वं काशते काशते चेति किं सदितीदमिदं नेत्यनुभूतिरिति कैषेतीयमियं नेत्यवचनेनैवानुभवन्नुवाचैवमेव चिदानन्दावप्यवचनेनैवानुभवन्नुवाच सर्वमन्यदपि स परम आनन्दस्तस्य ब्रह्मणो नाम ब्रह्मेति

प्रसिद्धिं साधयति—तत्सदिति। घटः सन्पटः सन्नित्यादिरूपेण सर्वं सद्रूपमेव भातीत्यर्थः। चिद्रूपत्वमपि प्रसिद्धमित्याह—चिद्धीति। प्रसिद्धिं साधयति—काशते काशते चेति। घटः प्रकाशते पटः प्रकाशत इत्यादिप्रकारेण सर्वं चिद्रूपं भासत इत्यर्थः। आनन्दात्मकत्वं तु सर्वत्र समावेशदर्शनादवगन्तव्यम्। इष्टविषये च स्पष्टमेवाऽऽनन्दात्मकत्वम्। सर्वं चेष्टमेव कदाचित्कस्यचिद्भविष्यति च स परम आनन्द इति। सदादिभेदनिरासचिकीर्षया प्रजापतिः शिष्यबुद्धिमपि वर्धयन्स्वयं सद्रूपं देवान्पृच्छति—किं सदितीति। ब्रूत सदादीनां स्वरूपं यद्भवद्भिः सदादिरूपं ज्ञातमित्यर्थः। देवैः सत्तासामान्यादिषु सद्रूपत्वेनाभिहितेषु तेषां व्यावृत्तत्वेनेदंतयाऽसत्त्वात्सत्त्वं निराचष्टे—इदमिदं नेतीति। इदमिदं च घटसत्तासामान्यादिकं भवद्भिरुक्तमिदंत्वादेव व्यावृत्तत्वेनासत्त्वान्न सद्रूपमित्यर्थः। किं तर्हि सदिति देवानामाकाङ्क्षामालक्ष्य स्वयमेव प्रजापतिः सद्रूपमाह—अनुभूतिरितीति। पुनरपि प्रजापतिः स्वरूपविवक्षया पृच्छति—कैषेतीति। तैर्घटज्ञानादिष्वनुभूतिशब्दार्थत्वेनोक्तेषु तेषां दृश्यत्वान्नानुभूतित्वमित्याह प्रजापतिः—इयमियं नेतीति। का तर्ह्यनुभूतिरित्याकाङ्क्षायामवाङ्मनसगोचरा सेतीयमिति यतो वक्तुं न शक्या तस्मादवचनेनैव स्वयमनुभवन्देवानां स्वतःसिद्धस्वरूपमेवानुभूतिरित्याह प्रजापतिरिति कथयति श्रुतिः। अवचनेनैवानुभवन्नुवाचेति। सत्स्वरूपोपदेशे कथितन्यायश्चिदानन्दयोः स्वरूपोपदेशेऽपि सम इत्याह श्रुतिः—एवमेवेति। अन्येष्वपि ब्रह्मलक्षणेष्विममेव न्यायमतिदिशति—सर्वमन्यदपीति। अन्यदपि पदार्थजातमेवमेवावचनेनैवानुभवन्नवाङ्मनसगोचरमेकरसमात्मनः स्वरूपमेवेत्याहेत्यर्थः। मूकीभावमात्रेण देवानां ज्ञातुमशक्यमिति मत्वा ब्रह्मणः स्वरूपमानन्दपदेन लक्षणया कथयति प्रजापतिः—स परम आनन्द इति। स मयाऽस्मानुभवेनोपदिष्टोऽर्थः परमो निरतिशय आनन्दः। एवं ब्रह्मणः स्वरूपमभिधाय ब्रह्मशब्दस्य लक्षणया तद्वाचकत्वमाह—तस्य ब्रह्मण इति। ततः किमायातं प्रकृत इत्याशङ्क्य प्रका-

१ ट. 'राचि'।

तस्यान्त्योऽयं मकारः स एव भवति तस्मान्मकारेण परमं[1] ब्रह्मान्विच्छेत्किमिदमेवमित्यु इत्येवाऽऽहाविचिकित्संस्तस्मादकारेणेममात्मानमन्विष्य मकारेण ब्रह्मणा संदध्यादुकारेणाविचिकित्सन्नशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड्भवति य एवं वेद । ब्रह्म[2] वा इदं सर्वमत्तृत्वादुग्रत्वाद्वीरत्वान्महत्त्वा-

रस्य ब्रह्मशब्दान्त्याक्षरत्वेन ब्रह्मशब्दत्वमेवेति तस्य ब्रह्मवाचकत्वं सिद्धमित्याह—तस्येति । तस्य ब्रह्मशब्दस्यान्त्योऽवसाने वर्णोऽयं प्रणवस्थो मकार इति कृत्वा स एव ब्रह्मशब्द एव भवति । तस्मात्तद्वदेव ब्रह्मवाचकत्वमपि सिद्धमेवेत्यर्थः । यस्माद्ब्रह्मवाचकोऽयं मकारस्तस्मात्तेन तत्प्रतिपत्तव्यमित्याह—तस्मादिति । एवमकारमकारयोः प्रत्यग्ब्रह्मार्थत्वमभिधाय मध्यस्थस्योकारस्य प्रत्यग्ब्रह्मणोरेकत्वावधारणार्थत्वं वक्तुमुकारस्य लोके कुत्रचिदवधारणार्थत्वं प्रसिद्धमिति कथयितुं लोकव्यवहारं तावद्दर्शयति—किमिदमित्यादिना । इदमाकाशादि घटादि चैवंरूपं किमित्येवं कश्चित्केनचित्पृष्ट उ इत्येवोत्तरमाह । स्वयमविचिकित्सन्नात्मनश्चेत्तत्र पृष्टेऽर्थे निश्चयो भवति तर्ह्यु इत्येवावधारयन्नुत्तरमाहेत्यर्थः । अनयैव श्रुत्यैवं व्यवहारः काप्यस्तीति ज्ञातव्यं तस्मादुकारस्यावधारणार्थत्वं लोके प्रसिद्धमिति भावः । एवं प्रणवाक्षरार्थमभिधाय तेन प्रत्यगात्मनो ब्रह्मैकत्वप्रतिपत्तिप्रकारमाह—तस्मादित्यादिना । यस्मादकारमकारोकाराणां प्रत्यग्ब्रह्मावधारणार्थत्वं सिद्धं तस्मादित्यर्थः । अविचिकित्सन्नेकत्वनिश्चयं कुर्वन् । अयमर्थः । अकारोच्चारणसमये सर्वं कृत्स्नं पूर्णं प्रत्यगात्मानमुक्तेन प्रकारेण प्रतिपद्याकारस्योकारेण संबन्धसमये प्रत्यगात्मनो ब्रह्मलक्षणलक्षितत्वेन ब्रह्मणैकत्वयोग्यत्वं निश्चित्योकारस्य मकारसंबन्धसमये मकारार्थेन ब्रह्मणाऽकारार्थस्य प्रत्यगात्मन एकत्वनिश्चयं कुर्यादित्यर्थः । अशरीर इत्याद्युक्तार्थम् । अथ सर्वात्मकस्य ब्रह्मणः प्रत्यगात्मनैकत्वं द्वितीयेन प्रणवेन वदन्ब्रह्मणः सर्वात्मकत्वं पुनरपि प्रकारान्तरेणाऽऽह—ब्रह्म वा इदमित्यादिना । प्रतिज्ञाते सर्वत्वे हेतुमाह—अत्तृत्वादिति । सर्वसंहर्तृत्वेन कारणत्वादित्यर्थः । संहर्तृत्वे संहारशक्तिविशिष्टत्वं हेतुमाह—उग्रत्वादिति । संहारसमर्थत्वेऽपि न संहरतीत्याद्याशङ्कायां परिभवासहत्वादिभिस्तां तां परिहरति—वीरत्वादित्यादिना । अत्तृत्वगु-

१ छ. परं । २ क. ग. °ह्म ह वा । ३ क. ग. घ. छ. °ममृतत्वा° । ४ म. अमृतत्वा° ।

द्विष्णुत्वाज्ज्वलत्वात्सर्वतोमुखत्वान्नृसिंहत्वाद्भीषणत्वाद्भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादहंत्वादिति सततं ह्येतद्ब्रह्मोग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वाज्ज्वलत्वात्सर्वतोमुखत्वान्नृसिंहत्वाद्भीषणत्वाद्भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादहंत्वादिति तस्मादकारेण परमं ब्रह्मान्विष्य मकारेण मनआद्यवितारं मनआदिसाक्षिणमन्विच्छेत्स यदैतत्सर्वमुपेक्षते तदैतत्सर्वमस्मिन्प्रविशति स यदा

णविशिष्टत्वेन ब्रह्मणः सर्वात्मकत्वं संप्रतिपत्तव्यमित्यभिधाय सततत्वगुणत्वादपि सर्वात्मकत्वं प्रतिपत्तव्यमित्याह—सततं हीति। सततं व्याप्तं देशतः कालतो वस्तुतश्चापरिच्छिन्नं हि यस्मात्तस्मादपि ब्रह्म सर्वमित्यर्थः। सततत्वे सर्वसंहारसमर्थत्वं हेतुमाह—उग्रत्वादिति। वीरत्वादिकं पूर्ववद्योज्यम्। भवत्वेवं गुणद्वयविशिष्टत्वात्सर्वात्मकं ब्रह्म प्रस्तुतायां प्रणवेन वाक्यार्थप्रतिपत्तौ किमायातमित्याशङ्क्य प्रणवस्थाकारस्य तत्पदार्थवाचकत्वात्तस्य तत्प्रतिपत्तिसाधकत्वं सिद्धमित्याह—तस्मादकारेणेति। अन्विष्येत्येतस्यान्विच्छेदित्यनेन संबन्धः। अयं भावः। अत्तृत्वसततत्वगुणविशिष्टं हि ब्रह्म सततशब्दश्चायमततिशब्दस्थाने प्रयुक्तः श्रुत्या तत उक्तगुणद्वयविशिष्टस्य ब्रह्मणो वाचकावत्त्यततिशब्दौ न त्वत्तृसततशब्दावत्त्यततिधातुद्वयं चाकाराद्यमिति धातुद्वयात्मक एवायमकारः। ततश्चात्तृत्वादिगुणविशिष्टब्रह्मवाचको मुख्यया वृत्त्या लक्षणया केवलब्रह्माभिधायकस्ततस्तेन लक्षणया प्रतिपत्तव्यमिति। मकारेण तु प्रत्यगात्मप्रतिपत्तिः कर्तव्येत्याह—मकारेणेति। मकारस्य प्रत्यगर्थत्वोपपत्तिमाह—मन आद्यवितारमिति। मनःशब्दो हि मनोवाचकस्तस्मिंश्च मनःशब्दे मकारो दृश्यते तदुपाधिकस्तद्रक्षिता तत्साक्षी च प्रत्यगात्माऽतः प्रत्यगात्ममकारयोः संबन्धस्य विद्यमानत्वात्तं मकारेणान्विच्छेदित्यर्थः। प्रतीचो मनआदिरक्षितृत्वं साधयति—स यदेत्यादिना। स प्रत्यगात्मा यदा यस्मिन्काले सुषुप्त्यादिप्रवेशसमय इत्यर्थः। एतत्सर्वं कार्यकारणजातमुपेक्षते तदभिमानं त्यजतीत्यर्थः। तदा किमित्याह—तदेति। अस्मिन्प्रत्यगात्मनि सन्मात्रोपाधिविशिष्टे प्रविशति विलीयत इत्यर्थः। तस्मिल्लँयमभिधाय तत एवोत्पत्तिमाह तस्य रक्षकत्वप्रदर्शनाय—स यदेत्यादिना। यदा जाग्रदादिभोगनिमित्तकर्मोद्भवस्तदाऽस्मादेवो-

प्रबुध्यते तदेतत्सर्वमस्मादेवोत्तिष्ठति स एत-
त्सर्वं निरूह्य प्रत्यूह्य संपीड्य संज्वाल्य सं
भक्ष्य स्वात्मानमेषां ददात्यत्युग्रोऽतिवीरोऽ-
रोऽतिमहानतिविष्णुरतिज्वलन्नतिसर्वतोमुखोऽ-
तिनृसिंहोतिभीषणोऽतिभद्रोऽतिमृत्युमृत्युरति-
नमाम्यत्यहं भूत्वा स्वे महिम्नि सदा समासते
तस्मादेनमकारार्थेन परेण ब्रह्मणैकी कुर्यादुका-

त्पद्यते सर्वमित्यर्थः। अथ सृष्टस्याऽऽत्मन्येव स्थितिमाह—स एतत्सर्वं *निरू-ह्येति। निर्वाह्य कंचित्कालं स्वात्मन्येव सद्रूपे स्थापयित्वा किमित्याह—प्रत्यू-ह्येत्यादिना। अनेन च ज्ञानहेतुक आत्यन्तिकः प्रलय उच्यते। स प्रत्यगात्मा ज्ञानबलेनैतत्सर्वं प्रत्यूह्य कारणात्मनि संहृत्य संपीड्य कारणात्मानमपि स्वात्म-नाऽन्तर्बहिश्च संव्याप्य संज्वाल्य चिद्रूपतामापाद्य संभक्ष्य स्वे तावन्मात्रतया विलाप्य स्वात्मानं चिन्मात्ररूपमेषां कार्यकारणरूपपदार्थानां ददाति न हि तेषां स्वरूपान्तरमस्ति कल्पितत्वात्। भक्षणादौ सामर्थ्यं दर्शयति—अत्युग्र इति। उग्रत्वगुणादतिक्रान्तत्वे सत्युग्रत्वमत्युग्रत्वम्। एवमतिवीर इत्यादिक-मपि योज्यम्। वीरादिपदानामवतारस्तूक्तप्रकारेणैव द्रष्टव्यः। स्वे महिम्नि सदा समासत इति। यस्मात्सर्वभक्षणादिकर्तृत्वेऽप्यस्य कोऽपि विकारो नास्ति प्रत्यगात्मनस्तस्मात्सर्वदा स्वे महिम्न्येवाऽऽस्तेऽसौ तस्माद्ब्रह्मणोऽने-नैक्यं युक्तमित्यर्थः। एवमकारस्य ब्रह्मार्थत्वं पूर्वमेवोक्तमुकारस्य त्ववधारणार्थ-त्वं पूर्वमेवोक्तम्। अथोक्तविधस्य ब्रह्मणः प्रत्यगात्मनैकत्वं प्रतिपत्तव्यमि-त्याह—तस्मादेनमिति। यस्मादकारमकारोकाराणां ब्रह्मप्रत्यगवधारणार्थत्वं सिद्धं तस्मादेनं प्रत्यगात्मानमित्यर्थः। अकारार्थेन ब्रह्मणाऽकारार्थं ब्रह्मेत्यर्थः। यथाश्रुतार्थस्वीकारे हि प्रथमप्रणवेनेव द्वितीयप्रणवेनापि प्रत्यगात्मनो ब्रह्मणै-कत्वप्रतिपत्तिरेव स्यात्। तथाच न व्यतिहारः सिध्यति व्यतिहारखण्डे च तेन भाव्यमतः पूर्ववत्प्रणवमुच्चरन्ब्रह्म प्रत्यगात्मनैकी कुर्यात्। अकारोच्चारणस-मये यथोक्तं ब्रह्म प्रतिपद्याकारस्योकारसंबन्धसमये ब्रह्मणः प्रत्यग्रूपत्वेन प्रत्य-गात्मनैकत्वयोग्यत्वं संचिन्त्योकारस्य मकारसंबन्धसमये मकारार्थेन प्रत्य-

* एतत्प्रत्यूह्येति च च्छान्दसत्वात्साधु।

रेणाविचिकित्सन्नशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड्भवति य एवं वेद तदेष श्लोकः—शृङ्गं शृङ्गार्धमाकृष्य शृङ्गेणानेन योजयेत् । शृङ्गमेनं परे शृङ्गे तम-

---

गात्मनाऽकारार्थस्य ब्रह्मण एकत्वनिश्चयं कुर्यादित्यर्थः। उक्तं च वार्तिककृद्भिः—

"अथवाऽकारमात्मानं मकारं च जगद्गुरुम् ।
अवधारणसंयुक्तमेकी कुर्यादथोमिति ॥
अहंशब्दैकदेशत्वाद्ब्रह्मशब्दैकदेशतः ।
अतत्याद्येकदेशत्वाद्ब्रह्माकारेण च स्मरेत् ॥
साक्षित्वान्मनआदीनां मकारेण तु साक्षिणम् ।
सावधारणमैकात्म्यमेवमोमिति पश्यति" इति ॥

व्यतिहाररूपप्रतिपत्तिसाधकत्वं प्रणवद्वयस्य । अत्रापि ब्रह्माकारेण च स्मरेदिति पठितत्वात् । द्वयोरपि प्रणवयोः प्रत्यगात्मनो ब्रह्मणैकत्वमेवोच्यत इति वदन्ति केचित् । तेषां पुनर्वचनानर्थक्यप्रसङ्गः प्रथमवचनमप्यनर्थकमेव तेषां साधनखण्ड एव प्रत्यगात्मनो ब्रह्मणैक्यस्योक्तत्वात् । ननु व्यतिहारपक्षेऽप्येकेनैव प्रणवेन व्यतिहारस्य सिद्धत्वात्पुनर्व्यतिहारकथनमनर्थकमेव । न । संग्रहविस्तराभ्यां भेदोपपत्तेः । तर्ह्यन्यत्राप्यकारमकारयोरर्थभेदादिच्छया प्रतिपत्तिसंभवाच्च न पौनरुक्त्यदोषः । व्यतिहारखण्डप्रसिद्धिस्तु व्यतिहारसद्भावमात्रेणैवोपपद्यते । श्रुतेर्यथाश्रुतार्थलाभश्चास्मिन्पक्षे महाल्लाँभः। अस्त्वेवं श्रुत्यर्थविदश्चेदेवमुपदिशन्ति । वक्ष्यमाणश्लोकविरोधस्त्वस्मिन्पक्षेऽपरिहार्यः । अशरीर इत्यादि फलकथनम् । उक्तेऽर्थे श्लोको भवति—तदिति । शृङ्गं छन्दसामृषभस्य प्रणवस्य शृङ्गमंशमकारमकारार्थं प्रत्यगात्मानमादायेत्यर्थः । शृङ्गार्धमुकारपूर्वार्धं तदर्थं ब्रह्म प्रत्याकृष्य ब्रह्मणैक्यं प्रतिपद्येत्यर्थः । शृङ्गेणानेन मकारेण तदर्थप्रत्यगात्मनेत्यर्थः । योजयेदुकारोत्तरार्धार्थं ब्रह्म योजयेत् । ब्रह्मणः प्रत्यगात्मनैकत्वं चिन्तयेदित्यर्थः । इत्येकेन प्रणवेन व्यतिहार उक्तः । शृङ्गमेनमहंशब्दादिभूतप्रणवाकारार्थमात्मानमित्यर्थः । परे शृङ्गे ब्रह्मशब्दान्त्यभूते मकारात्मकप्रणवमकारार्थब्रह्मणाऽऽकृष्योकारेणैकत्वं निश्चित्येत्यर्थः । तमन्त्यशृङ्गं पर-

नेनापि योजयेत् ॥

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीये षष्ठोपनिषदि
सप्तमः खण्डः ॥ ७ ॥

अथ तुरीयेणोतश्च प्रोतश्च ह्ययमात्मा सिंहोऽस्मिन्हि सर्वमयं हि सर्वात्माऽयं हि सर्वे

मात्मानमतत्त्वंशरूपप्रणवाकाराभिधेयं परमात्मानमित्यर्थः । अनेनापि मनआद्यविना प्रणवमकारार्थेन प्रत्यगात्मनाऽपि योजयेत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्रीमद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीये षष्ठोपनिषदि
सप्तमः खण्डः ॥ ७ ॥

---

एवं विभक्तेन प्रणवेनाऽऽत्मप्रतिपत्तिप्रकारमभिधाय तुरीयतुरीयेणाविभक्तेन प्रणवेन प्रतिपत्तिप्रकारो वक्तव्य इति खण्डान्तरारम्भः । अथेति । किंच तुरीयावसितत्वादेकैकस्येत्योतादीनामेकैकस्य तुरीयावसितत्वमुक्तं न तु तत्स्पष्टमभिहितमिति तदभिधानाय खण्डान्तरमारभते । अथ विभक्तप्रणवेनाऽऽत्मनो जीवेशरूपस्यैक्यप्रतिपत्त्यनन्तरमनेकपदतदर्थप्रतिपत्तिलक्षणस्य विक्षेपस्य शमनाय तुरीयेणाविभक्तेनोमित्येतेनोतानुज्ञात्रनुज्ञाविकल्परूपेणाऽऽत्मप्रतिपत्तिरभिधीयत इति शेषः । तत्रोतप्रणवेनोतस्याऽऽत्मनः प्रतिपत्तिं दर्शयितुमात्मन ओतत्वं प्रतिजानाति—ओतश्च प्रोतश्चेति । ओतश्च सामान्येन सन्मात्रात्मना प्रोतश्च चिदानन्दरूपेण । हीति प्रसिद्धिमाह । प्रसिद्धा हि सच्चिदानन्दानां सर्वत्र व्याप्तिः पुत्रसत्ता पुत्रसंवित्पुत्रसुखमित्यादिप्रकारेणेत्यर्थः । अयमात्मा पूर्वोक्तोऽयं ब्रह्मरूप आत्मा । सिंह इति सर्वसंसाररहितब्रह्मसर्वरूपत्वमभिहितमात्मनः । वाक्यार्थरूपेणाऽऽत्मना सर्वं व्याप्तमतो व्यापकत्वमेवोतत्वं न त्वात्मनो व्याप्यभावः कुत्रचिदोतत्वं संभवति । आत्मन ओतत्वं प्रसिद्धं स्वयमेवोपपादयति—अस्मिन्हीति । अस्मिन्हि सच्चिदानन्दरूपे व्यापके सर्वं व्याप्यत्वेन वर्तते । अस्मिन्सर्वं वर्तत इत्यत्र हेतुमाह—अयं हि सर्वात्मेति । न हि संविद्व्यतिरेकेण जगतः स्वरूपमस्तीत्यभिप्रायः । तर्ह्यात्मनो भिन्नमस्तु सर्वं जगदिति नेत्याह—अयं हि सर्वमिति । न व्यतिरेकेणाव्यतिरेकेण वा सर्वमस्ति किंत्वात्मैवास्तीत्यर्थः । तर्हि व्याप्यस्य सत्त्वाभावात्कथमो-

नैवोतोऽद्वयो ह्ययमात्मैकल एवाविकल्पो न हि वस्तु सदयं ह्योत इव सद्घनोऽयं चिद्घन आनन्दघन एकरसोऽव्यवहार्यः केनचनाद्वितीय ओतश्च प्रोतश्चैष ओंकार .एवं नैवमिति पृष्ट ओमित्येवाऽऽह वाग्वा ओंकारो

तत्वमुक्तमात्मन इत्याशङ्क्य मा भूत्पारमार्थिकमोतत्वमित्याह—नैवोत इति। किं तर्ह्युक्तमोतत्वमिति। अद्वयत्वेत्याह—अद्वयो ह्ययमात्मेति। अद्वयो हि यस्मादात्मा तस्मादोतत्वमुक्तमित्यर्थः। अद्वयत्वमात्मत्वं वाऽस्य न धर्म इत्याह—एकल एवेति। नन्वद्वितीयत्वादिकमात्मनो धर्मत्वेनाभ्युपगन्तव्यं सर्वात्मनोऽद्वितीयत्वादिधर्मैरेव व्यवहारादित्याशङ्क्याऽऽह—अविकल्प इति। व्यवहारस्य विकल्पमात्रत्वान्न परमार्थतोऽद्वितीयत्वादिधर्मवत्त्वमात्मन इत्यर्थः। यस्माद्विकल्पितमेव सर्वं व्याप्यं परमार्थतोऽद्वयोऽयमात्मा तस्मादात्मन उक्तमोतत्वं व्यापकत्वमेव कल्पितमेवेत्याह—अयं ह्योत इवेति। ननु सदादिरूपस्याऽऽत्मनः कथमद्वितीयत्वमुच्यते घटसत्ता पटसत्ता घटसंवित्पटसंवित्पुत्रसुखं वित्तसुखमित्यादिरूपेण तेषां भेदप्रतीतेरित्याशङ्क्य सन्मात्रे चिन्मात्रे सुखमात्रे च न भेदप्रतीतिरस्ति किं तु घटाद्युपाधिगतैव भेदप्रतीतिर्न च तेषामपि सन्मात्राद्भेदोऽस्त्यसंभवादित्याह सद्घनोऽयमित्यादिना वाक्यत्रयेण। सदादीनां परस्परभेदं निराचष्टे—एकरस इति। नन्विदं निर्विशेषं वस्तूपदेश्यान्प्रति कथमुपदेष्टुं शक्यते सर्वशब्दाविषयत्वादिति सत्यमेवं नैकेनापि शब्देन विषयत्वेनोपदेष्टुं शक्यत इत्याह—अव्यवहार्यः केनचनेति। अव्यवहार्य इत्यनेन धर्मेणोपदिश्यतां तर्हि नेत्याह—अद्वितीय इति। एवमात्मन ओतत्वमुपपाद्य तद्वाचकस्याप्योंकारस्योतत्वं तदभेदार्थमाह—ओतश्चेत्यादिना। प्रतिज्ञातमोंकारस्योतत्वमुपपादयति—एवमिति। किमिदमेवं भवति किमिदमेवं न भवतीति कश्चित्केनचित्पृष्ट ओमित्येवोत्तरमाहेत्यर्थः। किमयं भाव एवंरूपः किं वा नैवंरूप इति पृष्टे सत्ययं भाव एवंरूपः। अयं भावो नैवंरूप इत्युत्तरे वक्तव्ये तत्स्थान ओमित्येवोत्तरं दृश्यते। तस्मात्सर्ववाचकत्वादोंकारस्योतत्वं सिद्धमिति भावः। वाङ्मात्ररूपत्वाच्चोंकारस्योतत्वं सिद्धमित्याह—वाग्वा इति। सर्ववर्णकवलनरूपत्वाद्वैखर्यादिरूपत्वाच्च वाङ्मात्रत्वमवगन्तव्यमोंकारस्य वाङ्मात्रत्वेऽप्योंकारस्यार्थजातस्य पृथग्विग्रमा-

वागेवेदं सर्वं न ह्यशब्दमिवेहास्ति चिन्मयो ह्ययमोंकारश्चिन्मयमिदं सर्वं तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमनुज्ञाता ह्ययमात्मैष ह्यस्य सर्वस्य स्वात्मानमनुजानाति न हीदं सर्वं स्वत आत्मवन्न ह्ययमोतो नानुज्ञाताऽसङ्गत्वाद-

---

नत्वात्कथमोतत्वमिति तत्राऽऽह—वागेवेदं सर्वमिति । वाकार्यत्वाद्रूपस्य वाग्व्यतिरेकेणासत्त्वाद्वागेवेदं सर्वमित्यर्थः । वाचः सर्वानुगतिं दर्शयन्सर्वकारणत्वमुपपादयति—न हीति । न हि परापश्यन्तीमध्यमावैखरीरूपवाग्व्यतिरेकेण कस्यचिदपि प्रतिभासोऽस्तीत्यर्थः । बोधकत्वेन चिद्रूपत्वाच्चोंकारस्योतत्वमभ्युपगन्तव्यमित्याह—चिन्मय इति । चिन्मयत्वेन कथमोतत्वमिति चित ओतत्वादित्याह—चिन्मयमिदं सर्वमिति । चिन्मयत्वेन सर्वस्यापि परमेश्वरलक्षणस्य संभवात्परमेश्वर एवायमोंकार इत्याह—तस्मादिति । वाच्यवाचकभेदं निराचष्टे । एकमेव तदुभयं प्रणवपरमेश्वरस्यैकमेव चिन्मात्रं भवतीत्यर्थः । अस्यैकस्य वस्तुनः सर्वसंसाररहितत्वेन पुरुषार्थरूपत्वमाह—एतदित्यादिना । कथमस्यैवंरूपत्वमिति ब्रह्मरूपत्वादित्याह—एतद्ब्रह्मेति । ब्रह्मणस्त्वभयादिरूपत्वं सिद्धमित्याह—अभयं वा इति । एवंविदः फलमाह—अभयं हीति । यथाज्ञानं हि फलमित्यर्थः । उक्तमोतत्वज्ञानं गोपनीयमित्याह—रहस्यमिति । एवमोतप्रणवात्मनोस्तुरीयावसितत्वं प्रतिपाद्यानुज्ञातृप्रणवात्मनोस्तत्प्रतिपादयन्नात्मनस्तावदनुज्ञातृत्वं प्रतिजानाति—अनुज्ञाता हीति । कस्य किमनुजानातीत्याह—एष हीति । ओतभावनया तुरीयतुरीयस्वात्मन्यवस्थितस्य केनचिन्निमित्तेन चलिते मनसि द्वितीयप्रतिभासस्तावद्भवति । न चाऽऽत्मप्रतिपत्त्या बाधितस्य रसत्वेन स्वतः प्रतिभासः संभवत्यतस्तस्याऽऽत्मनि कल्पिततया प्रातिभासिकसत्तामनुजानातीत्यर्थः । नन्विदं सर्वं प्रतिभासमानत्वादात्मवत्स्वत एवाऽऽत्मवत्ततो नाऽऽत्मानुज्ञयैषामात्मवत्त्वमिति नेत्याह—न हीति । जडस्य स्वतः प्रकाशायोगात्सत्ताऽपि न स्वतोऽस्तीत्यर्थः । कथं तर्ह्योतत्वमनुज्ञातृत्वं चोक्तमात्मन इत्याशङ्कायामुक्तमेवोत्तरं स्मारयति—न ह्ययमिति । अत्र हेतुत्रयमाह—असङ्गत्वादित्यादिना ।

विकारित्वादसत्त्वादन्यस्यानुज्ञाता ह्ययमोंकार ओमिति ह्यनुजानाति वाग्वा ओंकारो वागेवेदं सर्वमनुजानाति चिन्मयो ह्ययमोंकारश्चिद्धीदं सर्वं निरात्मकमात्मसात्करोति तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमनुज्ञैकरसो ह्ययमात्मा प्रज्ञानघन एवायं ह्यस्मात्सर्वस्मात्पुरतः सुविभातोऽतश्चिद्घन एव न ह्ययमोतो नानुज्ञाताऽऽत्म्यं हीदं सर्वमसदेवानुज्ञैकरसो ह्ययमोंकार ओमिति ह्येवानुजानाति वाग्वा ओं-

एवमात्मनस्तुरीयपर्यन्तमनुज्ञातृत्वं प्रतिपाद्योंकारस्यापि तदाह—अनुज्ञाता हीति। तदुपपादयति—ओमितीति। किमहं तव स्वभूतमिदं गृह्णामीति निर्धनेनासत्कल्पेन पृष्टो धनवांस्तं धनिनं सन्तं कुर्वन्नोमिति हि तेन प्रार्थितमनुजानाति तस्मादोंकारस्याऽऽत्मानुज्ञातृत्वं सिद्धमित्यर्थः। अथवा यज्ञे जगत्सृष्ट्यादिकरं चरुपुरोडाशादिकं देवादीनामनुजानन्नोमिति हि यस्मादनुजानाति तस्मात्सिद्धमोंकारस्य सर्वेषामात्मानुज्ञातृत्वमित्यर्थः। वाग्वा ओंकार इत्यादि व्याख्यातप्रायम्। एवमोंकारात्मनोस्तुरीयपर्यन्तमनुज्ञातृत्वमुपपाद्यानुज्ञात्वमपि तुरीयपर्यन्तं तयोः सिद्धमिति वदन्नात्मनोऽनुज्ञात्वं तावदाह—अनुज्ञैकरस इति। अनुज्ञा न व्यापाररूपा किं त्वात्मैवेत्याह—प्रज्ञानघन इति। काल्पनिकरूपमनुज्ञातृयोगेन तुरीयतुरीयपर्यन्तेन स्वात्मनि विलाप्य स्थितं साक्षिचैतन्यमनुज्ञेत्यर्थः। चिद्घनत्वमुपपादयति—अयं हीति। कथं तर्ह्यस्यानुज्ञातृत्वमोतत्वं चोक्तमिति चेदस्योत्तरमुक्तमित्याह—न ह्ययमिति। तत्र हेतुमाह—आत्म्यं हीति। इदं सर्वं साक्ष्यमात्म्यं स्वत आत्मशून्यत्वादात्माहमात्मापेक्षमित्यर्थः। आत्मीयमात्मसंबन्ध्यात्मन्यध्यस्तमिति वाऽर्थः। अत आत्मव्यतिरेकेण नास्तीदं सर्वमित्याह—असदेवेति। ओंकारस्याप्यनुज्ञात्वं सिद्धमित्याह—अनुज्ञैकरस इति। अनुज्ञैकरसत्वमुपपादयति—ओमिति ह्येवेति। ओमित्येवं हि

१ छ. ह्ययमस्मा। २ क. ङ. ज्ञातैतदात्म्यं। ३ घ. ताऽऽत्मा हीं। ४ ङ. छ. सर्वं म।

कारो वागेव ह्यनुजानाति चिन्मयो ह्ययमोंकारश्चिदेव ह्यनुज्ञा तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमविकल्पो ह्ययमात्माऽद्वितीयत्वादविकल्पो ह्ययमोंकारोऽद्वितीयत्वादेव चिन्मयो ह्ययमोंकारस्तस्मात्परमेश्वर एवैकमेव तद्भवत्यविकल्पो नाविकल्पोऽपि नात्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्त्यत्र भिदामिव मन्यमानः शतधा सहस्रधा[1] भिन्नो मृत्योर्मृत्युमा-

शास्त्राचार्योक्तां सर्वस्य चिन्मात्रतामनुजानन्ननुजानाति विद्वान्विविदिषुश्चोमिति ह्येव सर्वमीश्वरायानुजानन्ननुजानातीत्यर्थः । वाग्वा इति परा वागुच्यतेऽन्यथाऽनुज्ञाया अनुज्ञातुः सकाशादान्तरत्वानुपपत्तेः । वक्ष्यति चाऽऽन्तरत्वं श्लोकेन—'ओतमोतेन जानीयादनुज्ञातारमान्तरम्' इति । यद्यप्योतानुज्ञातुरान्तरत्वमेवात्रोक्तं तथाऽप्यनुज्ञातुरनुज्ञाया निर्विकल्पस्य चाऽऽन्तरत्वमवगन्तव्यं संभवात् । यद्यपि सर्वे तुरीयावमितत्वेन समाना ओतादयस्तथाऽप्युक्तक्रमे बाह्यान्तरत्वं विद्यते तेषामित्यस्ति हि संभवोऽनुज्ञातुरनुज्ञाया आन्तरत्वेऽनुज्ञायाश्चाविकल्पस्य । आत्मनोऽविकल्पत्वमाह—अविकल्पो ह्ययमात्मेति । तत्र हेतुमाह—अद्वितीयत्वादिति । साक्षित्वलक्षणमनुज्ञातृत्वमपि विकल्परूपमेवेति तदपि विलाप्य स्वमहिमस्थं चैतन्यमविकल्पमित्यर्थः । ओंकारस्याप्यविकल्पत्वमाह—अविकल्पो ह्ययमोंकार इति । तत्रोक्त एव हेतुरित्याह—अद्वितीयत्वादेवेति । ओंकारस्याद्वितीयत्वं साधयति—चिन्मय इत्यादिना । एकमेव तद्भवतीत्युक्तं किं तदेकमिति तत्राऽऽह—अविकल्प इति । अविकल्पधर्मोऽप्यत्र नास्तीत्याह—नाविकल्पोऽपीति । अत्र हेतुमाह—नात्र काचन भिदाऽस्तीति । भेदप्रतिभासाभावादेव भेदाभाववचनं न तु भेदस्य स्वरूपतो भावादिति शङ्कां वारयति—नैवेति । भेददर्शने दोषदर्शनेनापि भेदासत्त्वमेव दृढयति—अत्र भिदामिति । देवादिभेदैर्नानात्वं प्राप्य तत्रापि न स्थैर्यं प्राप्नोतीत्यर्थः । उक्त-

[1] ग. घ. धा धा भि ।

**प्रोति तदेतदद्वयं स्वप्रकाशं महानन्दमात्मै-वैतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यम् ॥**

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीये षष्ठोपनिषद्य-ष्टमः खण्डः ॥ ८ ॥

**देवा ह वै प्रजापतिमब्रुवन्निममेव नो भगवन्नों-कारमात्मानमुपदिशेति तथेत्युपद्रष्टाऽनुमन्तैष**

स्याविकल्पस्याऽऽत्मत्वमाह—तदेतदिति। तदेतदद्वयमात्मैवेत्यन्वयः। अद्वयत्वे तत्प्रकाशहेत्वभावात्कथं तत्प्रकाश इत्याशङ्क्य स्वप्रकाशत्वमाह—स्वकाशमिति। स्वत एवास्य पुरुषार्थतामाह—महानन्दमिति। आनन्दत्वेन लौकिकानन्दवत्प्राप्तं दोषं परिहरति—एतदमृतमित्यादिना। एतदानन्दरूपमद्वयममृतं सर्वविकारवर्जितमतोऽभयं तस्माद्ब्रह्म। अभयं वा इत्यादि व्याख्यातम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्रीमद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीये षष्ठोपनिषद्य-ष्टमः खण्डः ॥ ८ ॥

---

अथेदानीमुक्तया तुरीयतुरीयपर्यन्तयोपासनयाऽतिशुद्धान्तःकरणस्य साक्षात्तुरीयतुरीयोपदेशप्रकारं शिष्यस्योपदिष्टार्थप्रतिपत्तिप्रकारं तया च प्रतिपत्त्या निरस्तनिखिलाविद्यस्य स्वरूपावस्थानं च दर्शयितुं खण्डान्तरस्याऽऽरंम्भः—देवा ह वा इति।

उक्तं च—"गुरूक्तविद्यया छिन्नसर्वाविद्यस्य या स्थितिः।
तां प्रवक्तुमुपेत्याद्य प्रारब्धैषोत्तरा श्रुतिः" इति।

इममेवेति। तदेतदद्वयं स्वप्रकाशं महानन्दमात्मैवेति कथितं निर्विकल्पमेवेत्यर्थः। ओंकारमित्योंकारलक्ष्यत्वादुच्यते। एवं देवैः प्रार्थितः प्रजापतिरुपदिशति—उपद्रष्टेत्यादिना। एष प्रत्यगात्मा सिंहः परमात्मैवेत्यन्वयः। ननु कथं कर्तृत्वादिसंसारविशिष्टस्याऽऽत्मन ईश्वरत्वमित्याशङ्क्य नाऽऽत्मनः कर्तृत्वादिकमस्तीत्याह—उपद्रष्टेति। कर्तृसमीपस्थः सन्कर्तृन्पश्यति न तु स्वयं कर्तेत्युपद्रष्टा। अतो न कर्तृत्वादिसंसारधर्मो ब्रह्मात्मन इत्यर्थः। तर्हि सांख्यसिद्धान्तप्रसक्तिरिति चेन्नेत्याह—अनुमन्तेति। स्वतःसत्ताप्रकाशप्रवृत्तिसाम-

---

१ ठ. 'रप्रार'।

आत्मा सिंहश्चिद्रूप एवाविकारो ह्युपलब्धा सर्वत्र न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव स वा एष आत्मा पर एवैषैव सर्वं तथा हि प्राज्ञे सैषाऽविद्या

ध्यैरहितानां कर्तृणां प्राणबुद्ध्यादीनां स्वात्मन्यध्यस्ततया तत्सर्वमनुजानातीत्यर्थः । तर्ह्यनुज्ञातृत्वप्रसक्तिस्ततस्तदपि कर्तृत्वमेवेति नाकर्तृब्रह्मणैक्यमात्मन इत्याशङ्क्याऽऽह—चिद्रूप एवेति । सर्वविकारसाक्षित्वेन चिद्रूपत्वं साधयति—अविकारो ह्युपलब्धेति । साक्षित्वमपि न विकारपूर्वकमित्याह—अविकारो ह्युपलब्धा सर्वत्रेति । विकारित्वे साक्षित्वं न हि घटत इति हीति सूचितम् । आत्मनोऽविकारित्वेन द्वैतसाधकत्वाभावादन्यस्य च तत्साधकस्यानुपपत्तेः । कथं तर्हि द्वैतसिद्धिरित्याशङ्क्यात एव परमार्थतो न द्वैतसिद्धिरित्याह—न ह्यस्ति द्वैतसिद्धिरिति । उक्तानुपपत्त्यर्थो हिशब्दार्थः । कथं द्वैतसिद्धिर्नास्ति प्रतीतेरित्याशङ्क्याऽऽत्मैव तद्रूपेण प्रतीयत इत्याह—आत्मैव सिद्ध इति । तर्हि तस्य सद्वयत्वेनाद्वितीयब्रह्मभावानुपपत्तिः । न । आत्मनः परमार्थतोऽद्वयत्वादित्याह—अद्वितीय इति । सद्वितीयप्रतिभासस्तु माययेत्याह—मायया ह्यन्यदिवेति । फलितमाह—स वा इति । स उपद्रष्टेत्युक्त एष मायया ह्यन्यदिवेत्यन्तेन शोधित आत्मा पर एव तल्लक्षणलक्षितत्वादित्यर्थः । मायायाऽऽत्मा सद्वितीय इव भासत इत्युक्तं तत्फलमाह—एषैव सर्वमिति । एषा मायैव सर्वसंसाररूपद्वयमित्यर्थः । ननु प्रसिद्धं सर्वं परित्यज्याप्रसिद्धस्वीकारोऽनुपपन्न इत्याशङ्क्याऽऽत्मनः परत्वं सर्वस्य मायामात्रत्वं चास्माभिरभ्युपगम्यत एतच्च सर्वं प्राणभृतां सुषुप्ते सिद्धमतो नाप्रसिद्धस्वीकार इत्याह—तथा हीति । यथाऽस्माभिरुक्तं स वा एष आत्मा पर एषैव सर्वमिति तथा हि तथैव हि प्रसिद्धं तत्सर्वेषां प्राज्ञे सुषुप्तावित्यर्थः । उक्तमेव स्पष्टतया दर्शयति—सैषेत्यादिवाक्यद्वयेन । सेति पूर्वोक्ता मायोक्ता । एषाऽविद्येति प्राज्ञे प्रसिद्धमज्ञानमुक्तं सामानाधिकरण्येन चैक्यं दर्शितं मायाविद्ययोस्तत एवैका जडशक्तिर्विक्षेपशक्तिप्राधान्येन मायोच्यत आच्छादनशक्तिप्राधान्येनाविद्योच्यत इति भावः । आत्मा परमात्मैवेति । प्रत्यगात्मनो ब्रह्मणैकत्वम् । स्वप्रकाश इति परमात्मनो विशेषणं तेन च परमात्मनः प्रत्यगात्मैकत्वं द्योतितं न ह्यात्मनोऽन्यस्य परमात्मनः स्वप्रकाशत्वं संभवतीति । सुषुप्ते यदि सर्वज्ञः परमात्माऽयं प्रत्यगात्मा किमित्यात्मानमन्यं च न विजानातीत्याशङ्क्यायमहमस्मीदमेवंरूप-

जगत्सर्वमात्मा परमात्मैव स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्नेव ह्यत्र न विजानात्यनुभूतेर्माया च तमोरूपाऽनुभूतेस्तदेतज्जडं मोहात्मकमनन्तं तुच्छमिदं रूप-

मिति स्पष्टदर्शनाभावे कारणमाह—अप्यविषयज्ञानत्वादिति। न जानातीत्युत्तरत्रान्वयः। अपिशब्दः शङ्कानुवादार्थः। यद्यप्ययं सर्वज्ञः परमात्मा सुषुप्ते तथाऽप्यविषयज्ञानत्वादात्मानमन्यं च न विजानातीति। अविषयज्ञानत्वादित्ययमर्थः। अविषयत्वादज्ञानत्वाच्चेति। तत्राविषयत्वादिति सन्मात्रव्यतिरिक्तविषयसंबन्धाभाव उक्तो यद्विषयं स्पष्टं ज्ञानं स्यात्। अज्ञानत्वादिति ज्ञायतेऽनेनेत्यन्तःकरणं बाह्येन्द्रियाणि च ज्ञानं तत्संबन्धरहितत्वादिति स्पष्टज्ञानकरणाभाव उक्तः। ज्ञानमात्रं तु सुषुप्तेऽप्यस्तीत्याह—जानन्नेव ह्यत्र न विजानातीति। स्वात्मानं स्वप्रकाशतया जानन्नेव वर्ततेऽज्ञानं च चैतन्याभासेनाज्ञानवृत्तिविशेषेण च जानन्नेव वर्तते सुषुप्तेऽप्यात्मा। अतो जानन्नेवाऽऽत्मा मूढैर्न विजानातीत्युच्यते। यत इदानीमिव सुषुप्ते सुषुप्तवदेवेदानीमप्यात्माऽविक्रिय एव भवतीत्यर्थः। केन प्रमाणेनोक्तस्यार्थस्य सद्भावसिद्धिरिति चेत्सर्वेषां स्वानुभवसिद्धोऽयमर्थ इत्याह—अनुभूतेरिति। आत्मा चेत्परमात्मनैकीभूतः स्वप्रकाशसुषुप्ते कथं तर्हि तत्र मायाविद्यासंभव इति चेत्सत्यमस्त्ययमनुपपत्तिस्तथाऽपि तमोरूपा माया सर्वेषां स्वानुभूतिबलादभ्युपगन्तव्येत्याह—माया च तमोरूपाऽनुभूतेरिति। अस्या मायायास्तमोरूपिण्याः सर्वजगन्मयत्वमुक्तमात्मनोऽद्वयत्वाय। एषैव सर्वं सैषाऽविद्या जगत्सर्वमिति च। तत्प्रतिपादनायास्या जगत्कारणत्वमुपपादयन्स्वरूपमाह—तदेतदित्यादिना। तत्र जडरूपजगत्कारणत्वोपपादनायास्या मायायास्तमसः सुषुप्तादौ सर्वेषां स्वानुभवसिद्धं जडत्वमाह—तदेतज्जडमिति। मूढोऽहमिदं च मूढमिति प्रसिद्धं मौढ्यमपि सुषुप्तमोहात्मकमेवेति वक्तुं सौषुप्ततमसः सर्वलोकप्रसिद्धिमाह—मोहात्मकमिति। तस्य सर्वकारणत्वसिद्ध्यै सुषुप्तिसमये सिद्धमेवाऽऽनन्त्यमाह—अनन्तमिति। सर्वविषयाज्ञानसंभवाज्जाग्रत्यप्यानन्त्यं सिद्धमज्ञानतमसः। अनिर्वचनीयजगत्कारणत्वाय सुषुप्तादौ स्वप्रकाशचिदाश्रयत्वानुभवबलसिद्धामनिर्वचनीयतामाह—तुच्छमिति। सत्कार्यवादिपक्षोपपादनाय सर्वस्यापि कार्यस्य सौषुप्ततमसि वासनारूपेणावस्थानमाह—इदं रूपमिति। ननु कस्येयमविद्या न तावज्जीवस्य तस्याविद्याधीनत्वेन तत्सिद्धेः पूर्वमेवाविद्यायाः साश्रयविष-

मस्यास्य व्यञ्जिका नित्यनिवृत्ताऽपि मूढैरात्मैव दृष्टाऽस्य सत्त्वमसत्त्वं च दर्शयति सिद्धत्वासिद्धत्वाभ्यां स्वतन्त्रास्वतन्त्रत्वेन सैषा वटबीजसामान्यवदनेक-

याया वक्तव्यत्वात्। नापीश्वरस्य सर्वज्ञत्वादविद्याधीनत्वाच्च। सत्यम्। अत एव न जीवेशयोरियं किं तु जीवेश्वरविभागास्पदचिन्मात्रस्येत्याह—अस्येति। स्वप्रकाशतयाऽखिलजगत्प्रसिद्धचिन्मात्राश्रयविषयतया सर्वेषु भानादित्यर्थः। मामहं न जानामीति चाऽऽत्ममात्राश्रयविषयत्वं प्रसिद्धमेवाज्ञानस्य न चास्याविद्यासंबन्धेन कदाऽपि काचिदपि हानिरस्ति परमार्थतः किं त्वौज्ज्वल्यमेवं तत्साक्षित्वेनाभिवृद्धं घृतपिण्डसंबन्धेनेवाग्नेरित्याह—अस्य व्यञ्जिकेति। तर्हि घृतपिण्डमिव दीप्तोऽग्निरात्मा तां दहेदित्यविद्यासत्त्वमेव न स्यादिति चेत्सत्यमित्याह—नित्यनिवृत्तेति। कथं तर्हि तस्याः कारणत्वमुच्यत इति चेदसत्यपि सा मूढैरविवेकिभिरात्माभिन्नेव दृष्टा कल्पिताऽसती सतीव भाति मूढानामतस्तेषां सर्वमुपपन्नमित्याह—नित्यनिवृत्ताऽपि मूढैरात्मैव दृष्टेति। एवं सर्वजगन्मूलाध्यासमुपपाद्य तत्कार्यभूतजीवेश्वराद्यध्यासं दर्शयति—अस्येत्यादिना। अस्य स्वाश्रयविषयरूपस्य चैतन्यस्य सत्त्वं स्वसाक्ष्यत्वेन तद्व्यञ्जकत्वाद्दर्शयति स्वतः सदसदादिविकल्पशून्यं चैतन्यम्। असत्त्वं चाऽऽच्छादकत्वेन मूढानां दर्शयतीत्यर्थः। सत्त्वासत्त्वदर्शनयोरुपपत्तिं स्वयमेवाऽऽह—सिद्धत्वासिद्धत्वाभ्यामिति। सिद्धत्वेन सत्त्वं दर्शयति। असिद्धत्वेन चासत्त्वं दर्शयतीति विभागः। स्वमहिमस्थं हि निर्विकल्पकचैतन्यमविद्यासंबन्धे तत्साधकत्वेन प्रकटी भवति। आकाशस्थमिव तेजो मूर्तसाधकत्वेन। स्वप्रकाशमपि चैतन्यं जडप्रधानं सदसिद्धमपि भवति। अविद्यास्वाभाव्यात्। ताभ्यां च सिद्धत्वासिद्धत्वाभ्यामात्मनः स्वातन्त्र्यं पारतन्त्र्यं च भवतीश्वरत्वे जीवत्वे च निमित्तभूतमित्याह—स्वतन्त्रास्वतन्त्रत्वेनेति। स्वयंसिद्धत्वेनाविद्यायाः सत्ताप्रतीत्यर्थक्रियाप्रदतयाऽविद्यां प्रति स्वातन्त्र्यं भवति चैतन्यस्याविद्याकृताभासद्वारा तस्यामात्मत्वारोपात्तद्वत्पारतन्त्र्यं च भवति चैतन्यस्यातश्च तदेकमेव चैतन्यं जीवेश्वरभेदभिन्नमिव भवति साहंकारनिरहंकारत्वाभ्यामित्यर्थः। वक्ष्यति च—अभिमन्ता जीवो नियन्तेश्वर इति। नन्वेकाऽविद्या कथमनेकजीवप्रतिभासहेतुरिति शङ्कायां दृष्टान्तेन तदुपपादयति—सैषेति। सैषाऽविद्या

१ छ. °तन्मन्वाम°। २ ञ. ठ. °वेशादिति। ३ ठ. °न्यस्य तद्गता°। ४ ठ. सैषा व°।

वटशक्तिरेकैव तद्यथा वटबीजसामान्यमेकम-
नेकान्स्वाव्यतिरिक्तान्वटान्सबीजानुत्पाद्य तत्र
तत्र पूर्णं संतिष्ठत्येवमेवैषा माया स्वाव्य-
तिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा
जीवेशावाभासेन करोति माया चाविद्या च

वटबीजसामान्यवदनेकवटशक्तिरेकैव सती यथा वटबीजसामान्यमनेकवटव्यक्त्युपादानसमर्थमेकमियमप्यनेकवटशक्तिरित्यर्थः । अत्र वटशब्देन क्षेत्राण्युच्यन्ते । वटवद्विप्रसृतत्वात्प्राण्युपजीव्यत्वाच्च महाभूताद्यात्मके क्षेत्रे वटशब्दो युक्त एव । अतोऽनेकजीवोपाधिभूतानेकक्षेत्रशक्तित्वादेकाऽप्यविद्याऽनेकजीवप्रतिभासहेतुर्भवतीत्यर्थः । ननु शक्तिशक्तिमतोर्भेदेऽनेकाविद्याप्रसङ्गः स चानुपपन्नोऽविद्यानां विषयाश्रयभेदानिरूपणात् । शक्तिशक्तिमतोरभेदश्चेत्तत्रापि शक्तिशेषपक्षेऽनेकाविद्याप्रसङ्गात् । शक्तिमच्छेषपक्षे त्वेकैवाविद्येत्येक एव जीवः स्यात् । तथाचानन्तजीवप्रतिभासविरोधो भेदाभेदपक्षश्चानुपपन्न इति चेत्सत्यमस्त्येवेयमनुपपत्तिर्वटबीजसामान्येऽपि ततस्तद्वदत्रापि द्रष्टव्यमित्यभिप्रेत्य दृष्टान्तमुपपादयति—तद्यथेति । शक्तिशक्तिमतोरभेदपक्षमाश्रित्याऽऽह—वटबीजसामान्यमेकमिति । एकत्वेऽप्यनेकवटहेतुत्वमाह—सामान्यमेकमनेकान्स्वाव्यतिरिक्तान्वटान्सबीजानुत्पाद्येति । कार्याणामपि शक्तिद्वारा वटबीजसामान्येनैक्यमाह—स्वाव्यतिरिक्तानिति । सबीजानित्येकैकस्यापि वटस्य सामान्यवत्पूर्णशक्तित्वमुक्तम् । एकैकेषु वटेषु वटसामान्यस्यैकस्यापि सर्वात्मनाऽवस्थानमाह—तत्र तत्रेति । दार्ष्टान्तिकं प्रपञ्चयति—एवमेवेति । माययेति । दुर्घटघटनासमर्थेत्यर्थः । एवमेकस्या अप्यविद्याया मायामयत्वेनानेकजीवादिप्रतिभासोत्पादनसामर्थ्यमभिधाय चैतन्यस्य तद्धर्माध्यासेन जीवादिभावे द्वारमाह—जीवेशावाभासेन करोतीति । आभासद्वारेणाविवेकात्तस्यां बद्धाहंभावो जीवो निरहंकारः स्वमायाभाससाक्षी स्वसत्तामात्रेण सर्वप्रवर्तकत्वादीश्वरः । अथवा मायायाः स्वकार्यभेदानुगतं नियामकं यद्रूपं तदाभासद्वारेणेश्वरं भवति विशेषमात्राभासप्राधान्येनानेकजीवं भवतीति जीवेश्वरविभागः । जीवेश्वरभेदकल्पनायाः पूर्वमेकैव जडशक्तिर्जीवेश्वरभेदमेवं संपाद्येश्वरस्य मायास्वातन्त्र्ये हेतुत्वेन जीवस्याविद्यास्वातन्त्र्ये हेतुत्वेन भवतीत्याह—माया चाविद्या च

१ क. छ. °न्स्वात्मव्य° । २ ठ. °द्यायां वि° । ३ ठ. °पक्ष एकै° । ४ ठ. °त् । सत्य° ।
५ म. ट. °न्स्वात्मव्य° । ६ ट. °रक° ।

**स्वयमेव भवति सैषा विचित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्नाऽङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमप्यभिमन्ता जीवो नियन्तेश्वरः**

स्वयमेव भवतीति । स्वयमेवेत्येकैव जडशक्तिरित्यर्थः । एवमविद्यानिमित्तमेव जीवेशभेदमुपपाद्य तन्निमित्तमेव जगत्प्रतिभासं ब्रुवन्सत्कार्यवादमाश्रित्य स्थित्यादिकाले प्रतीयमानस्य भेदजातस्य सूक्ष्मेण कारणमात्ररूपेण तस्यामवस्थितत्वेन तस्या वैचित्र्यं दर्शयञ्जगदाकारेणावस्थाने तस्याः सामर्थ्यं दर्शयति—सैषा विचित्रेति[1] । असती मायेयमिति मत्वा तन्निवृत्तिसाधनेऽनादरो न कार्य इत्याह—सुदृढेति । सम्यग्ज्ञानेन विनाऽनुच्छेद्येत्यर्थः । एवं तस्याः कारणत्वमुपपाद्येश्वरसंनिधानात्सा मायाऽनेकप्रकारेक्षणरूपेण परिणमत इत्याह—बह्वङ्कुरेति । अङ्कुरशब्देनेक्षणात्मकं प्रथमं कार्यमुच्यते । भूतादिसृष्टेः पृथग्वक्ष्यमाणत्वात् । अङ्कुरस्य बहुरूपत्वमुक्तं[2] वार्तिककृद्भिः—

"सर्वज्ञकरुणानुन्ना विचारज्ञानकामना ।
ईक्षणोपचयान्नादिरूपेणाथ विवर्तते" इति ।

कार्यगतप्रकाशचलनावरणरूपत्वनिर्वाहाय तस्याः सत्त्वादिरूपत्वमाह—स्वयं गुणभिन्नेति । चैतन्याभिव्यञ्जकत्वात्स्पन्दशक्तित्वाच्चैतन्याच्छादकत्वाच्च स्वयं माया सत्त्वरजस्तमआत्मिकेत्यर्थः । ततः कार्याणामपि सत्त्वादिरूपत्वं सिद्धमित्याह—अङ्कुरेष्वपीति । गुणत्रयस्य त्रिमूर्तिशरीरात्मकत्वात्सर्वमपि कार्यं त्रिमूर्त्यात्मकमेवेति वदन्सर्वमपीदमीश्वररूपेण द्रष्टव्यमित्याह—सर्वत्र ब्रह्मविष्णुशिवरूपिणीति । तस्यास्तद्रूपत्वे योग्यतामाह—चैतन्यदीप्तेति । यस्मादात्मव्यतिरेकेण न माया नाम काचनास्ति[3] तस्मादात्मैव स्वात्मनि कल्पितमायागतसत्त्वाद्याभासद्वारेण सर्वद्वैतजातोत्पत्तिस्थितिलयेषु त्रिमूर्त्यात्मेत्याह—तस्मादात्मन एव त्रैविध्यं सर्वत्रेति । गुणत्रयसाम्यशरीरः कारणात्मा सर्वेश्वरोऽपि स एवेत्याह—योनित्वमपीति । योनित्वमपि तस्यैवेत्यर्थः । एवमीश्वरभेदस्य मायानिमित्तत्वमभिधाय जीवेशभेदस्यापि सैव निमित्तमित्युक्तं व्यनक्ति—अभिमन्तेत्यादिना । समष्टिजीवत्वे निमित्तमाह—

१ क. ग. घ. ङ. चित्रा । २ ञ. 'पकत्व' । ३ ठ. काचिदस्ति ।

**सर्वाहंमानी हिरण्यगर्भस्त्रिरूप ईश्वरवद्व्यक्तचैतन्यः सर्वगो ह्येष ईश्वरः क्रियाज्ञानात्मा सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वावस्थासु तथाऽप्यल्पाः स वा एष**

---

सर्वेति । तस्यापि त्रिमूर्तित्वमाह—त्रिरूप इति । तस्य जीवत्वे तस्मिन्नीश्वरत्वव्यपदेशः क्वचित्कथमिति चेत्तस्य स्वत एवेश्वरात्मज्ञानवत्त्वेनेश्वररूपत्वादित्याह—ईश्वरवदिति । यथेश्वरो नित्याभिव्यक्तचैतन्यस्वभावस्तथाऽयमपीत्यर्थः । अथवा तन्नियन्तृत्वेनेश्वरस्यापि तत्र विद्यमानत्वात्तस्मिन्नीश्वरव्यपदेशोऽस्तीत्याह—सर्वगो ह्येष ईश्वर इति । हिरण्यगर्भे चैतन्याभिव्यक्त्यतिशये हेतुं वदंस्तस्य स्वरूपमप्याह—क्रियाज्ञानात्मेति । सर्वज्ञानक्रियाशक्तिसमष्टिरूपस्वच्छज्ञानक्रियाशक्तिमात्रशरीरत्वाद्धिरण्यगर्भस्य सवितृमण्डले तेजोवन्नित्याभिव्यक्तं तत्र ब्रह्मेत्यर्थः । हिरण्यगर्भस्य सर्वाहंमानित्वं स्वरूपं चाभिधायान्येषामपि जीवानां सर्वाहंमानित्वकथनाय तदुपाधीनां सर्वात्मकत्वमुक्तमनुवदति—सर्वं सर्वमयमिति । सर्वं क्षेत्रजातं सर्वमयं सर्वात्मकमायास्वरूपत्वादित्यर्थः । अतः सर्वेषामपि जीवानां सर्वाहंमानित्वं सिद्धमित्याह—सर्वे जीवाः सर्वमया इति । सर्वावस्थास्विति । अत्यल्पपुत्तिकाद्यवस्थास्वपि सर्वमया इत्यर्थः । सर्वेषां हि जीवानां सर्वावस्थासु सन्मात्रकारणे पृथिव्यादिजातमात्रे च कारणात्मवत्प्राप्तेस्तदभिन्नेऽभिमानः सूक्ष्मोऽस्ति तन्मध्यगतपिण्डविषयस्थूलाभिमानसमुद्भवात्तु जाग्रत्स्वप्नयोरसावनुद्भूतो भवति मन्दानाम् । पिण्डाभिमानतिरोभावे तु सुषुप्तप्रलयादौ परिपूर्णसन्मात्रसर्वजात्यभिव्यक्तेः । स्वाभाविकोऽभिमानः समुद्भूतो दृश्यते सर्वैरतः सर्वे जीवाः सर्वमयाः सर्वावस्थास्वित्यर्थः । अन्यथा कथं हिरण्यगर्भादिभावः संभवति । न ह्यसत उत्पत्तिरस्ति तस्मात्सर्वेषां सर्वज्ञानकर्मफलयोग्यत्वात्सर्वात्मत्वमस्त्येव । यद्यप्येवं सर्वे जीवाः सर्वावस्थासु सर्वमयाः स्वाभाविकाविद्याशरीरत्वेन तथाऽपि कार्यात्मकं सप्तदशकं लिङ्गशरीरमपरिच्छिन्नमपि परिच्छिन्नज्ञानकर्मवशात्परिच्छिन्ने स्थूलशरीरे यदा संकोचं प्राप्नोति तदाऽल्पाभिमानित्वमप्यस्तीत्याह—तथाऽप्यल्पा इति । यद्यपि सर्वमयाः सर्वावस्थासु तथाऽप्यल्पा इत्यर्थः । अथवा यथा सर्वमयास्तथाऽल्पा अपीत्यन्वयः । सृष्टिशेषाभिधानपूर्वकं प्रवेशव्यवहारौ दर्शयन्सृष्ट्यादेर्मिथ्यात्वमाह—स वा इत्यादिना ।

१ ट. °नवत्त्वेने° । २ अ. ट. °र्भेऽप्यत एव चै° । ३ ट. °याशक्तिश° ।

भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव तस्मादद्वय एवायमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगतः सत्तामात्रं

स सुषुप्तस्थः कारणात्मैषं बहङ्कुर इत्यत्र क्षेत्रत्वेन प्रस्तुत इति तदेतच्छब्दयोरर्थः । ईश्वररूपः प्रत्यगात्मेति वाऽर्थः । भूतान्यपञ्चीकृतानि सृष्ट्वा तेभ्य इन्द्रियाणि ततः पञ्चीकृत्य विराजं ततस्तत्करणेभ्योऽग्न्यादिदेवताः पुनर्व्यष्टिरूपान्नमयादिकोशांश्च सृष्ट्वा सृष्टे प्रविश्य तत्र विशेषाभिव्यक्त्या व्यवहारयोग्यतां प्राप्यामूढः स्वतः स्वमहिमस्थतया मूढ इव मिथ्यारूपपरिच्छेदाभिमानेन व्यवहरन्नहं कर्ता भोक्ता देवदत्तो देवो मनुष्य इत्यादिप्रकारेणाऽऽस्ते माययैव तत्सृष्ट्यादिकं करोति न स्वतोऽतो मिथ्यारूपा एव सृष्टिसृज्यप्रवेशव्यवहारा इत्यर्थः । मायामयसृष्टिकथनस्य प्रयोजनमाह—तस्मादद्वय एवायमात्मेति । यदुक्तमादावात्मैव सिद्धोऽद्वितीय इति तत्सृष्टेः सृज्यस्य च मायामयत्वेन परमार्थतोऽसत्त्वात्सिद्धमित्यर्थः । अद्वयस्याऽऽत्मनः स्वरूपमाह—सन्मात्र इत्यारभ्य प्रत्यगेकरस इत्यन्तेन । पुनरप्यद्वयपदग्रहणं प्रासङ्गिकम् । कुतोऽस्याऽऽत्मन एवंरूपत्वं सिद्धमिति तदाह—प्रमाणैरेतैरवगत इति । प्रमाणैः प्रत्यक्षादिभिरेतैश्च सन्मात्रत्वादिहेतुभिः सदादिरूप आत्माऽवगन्तव्य इत्यर्थः । तत्र सर्वद्वैतसिद्धेः पुरस्तात्स्वप्रकाशचिन्मात्रानुभवः सन्मात्रत्वादिसाधकं प्रत्यक्षं दृश्यत्वपदार्थत्वादिहेतुभिश्चिन्मात्रव्यतिरिक्तस्य सर्वस्य मिथ्यात्वसाधकमनुमानं 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'प्रज्ञानघन एव' इत्यादिवाक्यान्यागमो जगतः सदादिरूपत्वप्रतिभासान्यथानुपपत्तिर्मुक्त्यादिश्रुत्यन्यथानुपपत्तिश्चार्थापत्तिः सर्वद्वैतसिद्धेः पुरस्ताद्द्वैतानुपलब्धिरभाव एतैरवगत इति सन्मात्रत्वादीनां सर्वेषां हेतुहेतुमद्भावस्योक्तत्वाद्यदाऽऽत्मनः सन्मात्रत्वं साध्यते तदा नित्यत्वादिभिर्हेतुभिस्तत्साधनीयं यदा नित्यत्वं साध्यते तदा सन्मात्रत्वादिभिर्हेतुभिर्द्वादशभिस्तदपि साधनीयमेवं शुद्धत्वादिकमपीति द्रष्टव्यम् । तत्राऽऽत्मनः सन्मात्रत्वं तावत्स्वयमेव युक्तितोऽनुभवतश्च साधयति—सत्तामात्रमित्यादिना । सत्तायाः सर्वत्रानुगमाद्व्यभिचारिणां चानुगते कल्पितत्वात्सत्तामात्रं

१ ठ. तत्क । २ ठ. मसत्तया । ३ ठ. मिश्च चि ।

**ह्यीदं सर्वं सदेव पुरस्तात्सिद्धं हि ब्रह्म न ह्यत्र किंचनानुभूयते नाविद्याऽनुभवात्मनि स्वप्रकाशे सर्वसाक्षिण्यविक्रियेऽ-**

ह्यीदं सर्वमित्यर्थः । ननु सत्ताया जातित्वाज्जातेश्च व्यक्तिसापेक्षत्वात्कथं सर्वं सत्तामात्रमित्याशङ्क्य सन्मात्रमेव कारणं स्वाव्यतिरिक्तं कार्यमुत्पाद्य तदनुगतं सत्सत्ताजातिसंज्ञामाप ततः कार्यस्य कारणमात्रत्वात्तत्रानुगत्युपपत्तेर्न सत्ता जातिः किं तु कारणरूपं सन्मात्रमेवेत्याह—सदेवेति। कारणस्यापि सैषा विचित्रेति विचित्रत्वोक्तेस्तत्र सदेवेत्येवकारानुपपत्तिमाशङ्क्य कारणादपि व्यतिरेकमाह—पुरस्तात्सिद्धं हीति । कारणादपि व्यतिरेके तस्यापि साक्षित्वं हेतुमाह—हीति । कारणस्यापि साधकं चैतन्यमेव । यतश्चित्ते चैतन्यैकाकारे कारणस्याप्यनुपलब्धेस्तस्य न सत्त्वमुपपद्यत इत्यर्थः । तस्माद्ब्रह्मैव सदित्याह—पुरस्तात्सिद्धं हि ब्रह्मेति । पुरस्तात्सिद्धस्य परिच्छेदकाभावेन च ब्रह्मत्वं प्रत्यक्षेण साधयति—न ह्यत्रेति । अत्र पुरस्तात्सिद्धे चिन्मात्रे स्वात्मनि न किंचिदपि तद्व्यतिरिक्तं तत्परिच्छेदकमनुभूयते तन्निष्ठत्वेन ततस्तस्य ब्रह्मत्वमुपपद्यत इत्यर्थः । ननु पुरस्तात्सिद्धे चैतन्येऽविद्या दर्शिता पूर्वमस्येति तत्कथं तत्र परिच्छेदकाभाव इत्याशङ्क्य न तत्र परमार्थतोऽविद्याऽस्ति कल्पितत्वात्तस्या इत्याह—नाविद्येति । तत्र हेतुमाह—अनुभवात्मनीति । अनुभवस्यापि परप्रकाश्यत्वे तद्विषयमज्ञानं संभवेदपि कदाचिन्न च तथाऽनुभवस्य परप्रकाश्यत्वं तथा सत्यनुभवत्वायोगात्तत्श्च स्वप्रकाशत्वादज्ञानतत्कार्ययोस्तत्रासंभवात्तस्य ब्रह्मत्वं सिद्धमित्याह—स्वप्रकाश इति । स्वप्रकाशे यद्यज्ञानं परमार्थतोऽभ्युपगम्यते तर्हि तन्नाश एव बलादभ्युपगन्तव्यः । न हि नाशं विना स्वप्रकाशस्य स्वात्मानं प्रत्यभानं संभवति नाशश्चानुपपन्न इत्याह—सर्वसाक्षिणीति । नाशादेरपि साक्षिणं विना न सिद्धिरित्यर्थः । ननु पुरस्तात्सिद्ध आत्मैव कारणं सर्वस्य जगतस्तदन्यस्य निःस्वभावस्य कारणत्वायोगात्कार्यं च कारणस्थमेव सर्वदा ततः कथं पुरतोऽद्वयत्वमित्याशङ्क्य नास्य[1] परमार्थतः[2] कारणत्वं किं तु मायाद्वारेणैव कारणत्वमिति मायामयमेव तत् । अतोऽविक्रियेऽस्मिन्न किमपि परिच्छेदकमस्तीत्याह—अविक्रिय[3] इति । कार्यकारणत्वाभाववद्गुणगुणित्वधर्मधर्म्यंशांश्यवस्थावद्भावोऽपि नास्ति जगतोऽस्यातश्चात्र किमपि परिच्छेदकं नास्तीत्याह—

१ ठ. 'सिद्धमात्मै' । २ ठ. पुरोऽद्व' । ३ ठ. 'क्रिये तस्मि' ।

द्वय पश्यतेहापि सन्मात्रमसदन्यत्सत्यं हीत्थं पुरस्तादयोनिः स्वात्मस्थमानन्दचिद्घनं सिद्धं ह्यसिद्धं तद्विष्णुरीशानो ब्रह्माऽन्यदपि सर्वं सर्वगं

अद्वय इति । न केवलं पुरत एव सर्वस्य सन्मात्रत्वमनुभवितुं शक्यते किं तु परतोऽपि व्यवहारकाले सर्वस्य सन्मात्रत्वविशेषाणामप्यवगमादित्याशङ्क्य विशेषाणामसत्त्वमाह—असदन्यदिति । सतोऽन्यत्वे विशेषाणामसत्त्वमनन्यत्वेऽपि विशेषाणामसत्त्वमेवेत्यर्थः । ननु विशेषाणामसत्त्वे सन्मात्रस्यापि भानायोगादसत्त्वमेव स्यादिति नेत्याह—सत्यं हीति । सत्यत्वे हीति सूचितं हेतुमाह—इत्थं पुरस्तादिति । सर्वकल्पनासाक्षितया कल्पकत्वेन वा कल्पितस्य सन्मात्रस्य सर्वप्राणिभिः[1] सर्वकल्पनायाः प्रागेव सिद्धत्वान्न तस्यासत्त्वं शङ्कनीयमित्यर्थः । सर्वकल्पकत्वेन पुरस्तात्सिद्धत्वे द्वैतकारणत्वेन पुनरपि सद्वितीयत्वं प्राप्तमिति चेन्न यतोऽस्य परमार्थतः कल्पकत्वमपि नास्तीत्याह—अयोनिरिति । यद्यप्येवं पुनः पुनरुपपाद्यते सन्मात्रं सर्वमिति तथाऽपि मया सन्मात्रं नानुभूयते किंतु घटपटादिकं जगत्तदनुगतां च सत्तां पश्यामीत्याशङ्क्य नैवं बहिर्मुखेन त्वया सन्मात्रान्वेषणं कार्यं यतः स्वे महिम्नि प्रत्यगात्मन्येव स्थितं तन्न पटादावित्याह—स्वात्मस्थमिति । कस्यचिदपि द्वितीयस्यासत्त्वे सुखानुभवस्याप्यसंभवान्न पुरुषार्थरूपं तदिति चेन्नेत्याह—आनन्दचिद्घनमिति । स्वयमेवाऽऽनन्दानुभवात्मकमेकरसं चेत्यर्थः । सदानन्दचिद्रूपत्वे हेतुमाह—सिद्धं हीति । सर्वसाक्षितया पुरतोऽपरोक्षतया स्वत एव सिद्धेः सत्त्वं चित्त्वमानन्दस्वरूपत्वं च सिद्धमित्यर्थः । सिद्धं चेत्केनचित्स्वव्यतिरिक्तेनैव प्रमाणेन तत्सिद्धमिति प्रमाणसापेक्षत्वान्न स्वातन्त्र्यमतो नाऽऽनन्दरूपत्वमनुभवरूपत्वं चेति चेन्न । यतः प्रमाणस्यापि साधकत्वान्न प्रमाणविषयमतः स्वातन्त्र्यादानन्दादिरूपत्वे पुरुषार्थरूपमेव तदित्याह—असिद्धमिति । ननु विष्ण्वीशादिमूर्तिभावस्तादात्म्यं वा पुरुषार्थो न सन्मात्रभाव इत्याशङ्क्य मूर्तीनां मायामयगुणरूपत्वेनात्र कल्पितत्वस्योक्तत्वात्तव्द्यतिरेकेण तेषां सत्त्वमत एव तद्भाव एव परमपुरुषार्थ इत्याह—तद्विष्णुरित्यादिनाऽन्यदपि सर्वमित्यन्तेन । विष्ण्वादिशब्दानां हि सन्मात्र एव मुख्यार्थलाभस्ततः सदात्मैव विष्ण्वादिरूप इत्यर्थः । सदेव सर्वमित्यत्र हेतुं स्वयमेवाऽऽह—सर्वगमिति । सर्वं विष्ण्वादिकं गमयति प्रकाशयति सृजति स्थापयति संहरति च माययेति सर्वगं

१ ठ. सर्वप्राणिनां ।

सर्वमत एव शुद्धोऽबाध्यस्वरूपो बुद्धः सुखरूप आत्मा न ह्येतन्निरात्मकमपि नाऽऽत्मा पुरतो हि सिद्धो न हीदं सर्वं कदाचिदात्मा हि स्वमहिमस्थो निरपेक्ष एक एव साक्षी स्वप्रकाशः

विष्ण्वादिमूर्तीनां सृष्ट्यादिकर्त्रित्यर्थः । सत्तामात्रं हीदं सर्वमित्युपक्रम्य सर्वगमित्यन्तेन सन्मात्रात्मस्वरूपमेव सर्वमित्युपपाद्य तस्य सन्मात्रस्य यत्पूर्वोक्तं ब्रह्मत्वं पुरस्तात्सिद्धं हि ब्रह्मेति तदुपसंहरति—सर्वमिति । सर्वं कृत्स्नं पूर्णं ब्रह्मेत्यर्थः । अत्र त्वंपदार्थविशेषणत्वेनोक्तानां सन्मात्रत्वादीनां शोधने तेषां ब्रह्मस्वरूपत्वकथनं सन्मात्रादिरूपस्य प्रत्यगात्मनो ब्रह्मत्वोपपादनाय प्रत्यगात्मनोऽपि विचारे ब्रह्मत्वं प्रतीयत इति वक्तुमुत्तरत्र ब्रह्मविशेषणत्वेनापि सदादीनां वक्ष्यमाणत्वाच्च सन्मात्रत्वोपपादनायोक्तं न्यायमितरपदार्थरूपत्वप्रतिपादनेऽप्यतिदिशति—अत एवेत्यादिना । शुद्धादिग्रहणं सर्वेषामुपलक्षणमिति द्रष्टव्यम् । अबाध्यस्वरूप इति सत्पदार्थोक्तिः । आत्मेति प्रत्यक्पदार्थो दर्शितः । अथाऽऽत्मत्वेनापि हेतुनाऽऽत्मनोऽद्वितीयत्वं साधयति—न ह्येतन्निरात्मकमित्यादिना । एतत्कार्यकारणात्मकं जगन्न हि निरात्मकं निःस्वरूपं किं तु सत्स्वरूपमेव स्वरूपमात्मेति पर्याय इत्यर्थः । तथाऽपि द्वैतस्याऽऽत्मना सत्स्वरूपत्वे द्वैतस्यापि स्वरूपत्वेन सद्भावादात्मनः सद्वयत्वं स्यादित्याशङ्क्य यथा द्वैतस्यावशेषः स्यान्न तथाऽयं तस्याऽऽत्मा किं तु सर्वग्रासेनातो द्वैतस्याऽऽत्मेत्येवं द्वैतसापेक्षमात्मत्वं नास्तीत्याह—अपि नाऽऽत्मेति । आत्मनो निरपेक्षमात्मत्वमित्यत्र हेतुमाह—पुरतो हीति । सर्वद्वैतसिद्धेः पूर्वमप्यात्मैव सिद्धोऽतो निरपेक्षमस्याऽऽत्मत्वमित्यर्थः । द्वैतस्य पुरतोऽसत्त्वे युक्त्यनुभवसिद्धे सत्यद्वितीयात्मनि तद्विरुद्धस्य द्वैतस्य तदपेक्ष्यस्य पुरत इव परतोऽपि परमार्थतो नास्तित्वमेवेत्याह—न हीदं सर्वं कदाचिदिति । नन्वात्मनोऽपि सिद्धेः कालापेक्षाऽस्ति पुरतोऽपि सिद्ध इत्युक्तत्वान्नेत्याह—आत्मा हीति । आत्मनो निरपेक्षत्वादेकत्वात्साक्षित्वात्स्वप्रकाशत्वाच्चास्तित्वमनात्मनस्तु तद्वैपरीत्यादसत्त्वमित्याह—निरपेक्ष इत्यादिना । उपद्रष्टेतिवाक्येन ब्रह्मात्मनोरेकत्वमुपदिश्य विरोधाशङ्कायां प्रत्यगात्मनो ब्रह्मलक्षणलक्षितत्वेन ब्रह्मत्वमुपपादितं स्वप्रकाश इत्यन्तेन ग्रन्थेन । एवमुपपादितेऽप्यतिसूक्ष्मत्वादप्रमेयस्य परोक्षत्वमिव पश्य-

१ क. ग. घ. ङ. °बाह्यस्व° । २ ठ. °न्मात्रब्रह्मस्व° । ३ ज. ट. विचारिते । ४ ट. सत्यपदा° । ५ ठ. अथापि । ६ ठ °पेक्षस्य । ७ ञ. ट. °क्षमि° ।

किं तन्नित्यमात्माऽत्र ह्येव न विचिकित्स्यमेतद्धीदं सर्वं साधयति द्रष्टा द्रष्टुः साक्ष्यविक्रियः सिद्धो निरविद्यो बाह्यान्तरवीक्षणा-

न्तो देवा आहुः—किं तन्नित्यमिति । किं तन्नित्यशुद्धबुद्धादिरूपमात्मभूतं ब्रह्मेत्यर्थः । प्रजापतिर्न परोक्षं तद्ब्रह्मेत्युत्तरमाह—आत्मेति । नन्वात्मा चेद्ब्रह्म तर्ह्यात्मन आपरोक्ष्यमेव ब्रह्मापरोक्ष्यमात्मा च सर्वेषां सर्वदाऽपरोक्ष एवेति न कस्यापि कदाचिदपि संसारप्रतिभासः स्यात् । भासते तु तस्मान्नाऽऽत्मभूतं ब्रह्मेत्याशङ्कायामाह—अत्र ह्येव न विचिकित्स्यमिति । अत्र ब्रह्मण आत्मत्वे हि यस्मान्न विचिकित्स्यं संशयितव्यं संशयकारणाभावादित्यर्थः । हीति संशयकारणाभावः सूचितः । आत्मानुभवेऽपि संशयदर्शनान्नासंसारिब्रह्माऽऽत्मेति दर्शितं ननु शङ्काकारणम् । न । तेषामात्मानुभवस्याभावात् । ते हि देहादिकमेवाऽऽत्मानं मन्यमानास्तदापरोक्ष्यमेवाऽऽत्मापरोक्ष्यं मन्यन्ते न तु केवलमात्मानं ब्रह्मरूपं ते जानन्तीति हिशब्देनोक्तम् । ननु नास्त्येव ब्रह्म यद्यस्ति तथाऽपि तटस्थमेव तन्नाऽऽत्मभूतं जगत्कारणत्वेन श्रवणात् । न ह्यात्मनो जगत्कारणत्वं दृश्यत इति तत्राऽऽह—एतद्धीति । एतदात्मरूपं ब्रह्म हि यस्मादिदं सर्वं द्वितीयं दर्शनादिकाले साधयति सृजति[2] । स्थितिसंहारादेरुपलक्षणार्थं सृष्टिः । आत्मनोऽन्यस्य दृश्यत्वेनाचेतनत्वादचेतनस्य जगत्कारणत्वानुपपत्तेर्जगत्कारणस्य ब्रह्मणः केवलस्य मुख्यवृत्त्यैवाऽऽत्मत्वमभ्युपगन्तव्यमिति हिशब्दार्थः । एवं युक्तितो ब्रह्मण आत्मत्वमुपपाद्यान्वयव्यतिरेकचतुष्टयेनाऽऽत्मनो ब्रह्मत्ववत्सच्चिदानन्दपूर्णात्मत्वमनुभावयितुमुपलक्षणत्वेन द्रष्टृदृश्यसाक्षिसाक्ष्यान्वयव्यतिरेकावाह—द्रष्टेत्यादिना । तत्र द्रष्टेति द्रष्टृदृश्यान्वयव्यतिरेकोक्तिः । ननु द्रष्टाऽपि सुखदुःखसंसारधर्मविशिष्टः कथं ब्रह्मेत्याशङ्क्य न सुखदुःखादिविशिष्टो द्रष्टा किं तु तस्यापि साधकः साक्षीति वदन्साक्षिसाक्ष्यान्वयव्यतिरेकमाह—द्रष्टा द्रष्टुरिति । सोऽपि द्रष्टृत्वात्परिणाम्येवेति चेन्न सर्वविकारसाक्षित्वादित्याह—साक्षीति । सोऽपि साक्षादीक्षणस्य कर्तेति चेत्तथा सति विकारित्वेन साक्षित्वायोगात्सर्वविकारसाक्ष्यविक्रिय एवेत्याह—अविक्रिय इति । कोऽसौ साक्षीति तु प्रश्नोऽनुपपन्नः [illegible]त्येत्याह—सिद्ध इति । न वयं विद्म इति वा वक्तुं न शक्यत इत्याह—निरविद्य[3] इति । निरविद्यत्वं साधयति—बाह्यान्तरवीक्षणादिति । कार्यं बाह्यं कारणमा-

१ क. ग. घ. ङ. निरवद्यो । २ ट. °ति । सं° । ३ अ. °रवद्य । ४ अ. °रवद्य° ।

त्सुविस्पष्टस्तमसः परस्ताद्‌ब्रूतैष दृष्टोऽदृष्टो वेति दृ-
ष्टोऽव्यवहार्योऽप्यल्पो नाल्पः साक्ष्यविशेषोऽन-
न्योऽसुखदुःखोऽद्वयः परमात्मा सर्वज्ञोऽनन्तोऽ-

न्तरं तयोर्वीक्षणादित्यर्थः। कार्यकारणवीक्षणेऽपि वीक्षितुः स्वस्वरूपेऽज्ञानं किं न स्यादिति चेत्सर्वसाधकत्वेन सर्वस्मात्पुरतः स्वयंप्रकाशत्वादीक्षितुरित्याह—सुविस्पष्ट इति। तमोऽज्ञानं कारणं तस्यापि साधकत्वेन ततोऽप्युपरि प्रत्यगात्मा सुविस्पष्ट इत्यर्थः। एवमुपदिश्य प्रजापतिस्तेषां भावं ज्ञातुं पृच्छति—ब्रूतेति। एष मयोपदिष्टोऽद्वय आत्मा दृष्टः किं वा न दृष्टो भवद्भिरिति ब्रूतेत्यर्थः। ते बुद्धिगतं चैतन्याभासमात्मसदृशं पश्यन्त आहुः—दृष्ट इति। तेषामन्यथाज्ञानं लिङ्गेन विदित्वा तद्व्युदासाय भवद्भिर्विदित आत्मा कीदृश इत्युक्ते ते होचुः—अव्यवहार्य इति। यद्यपि दृष्टस्तथाऽप्यव्यवहार्य इत्यर्थः। न हि चैतन्याभास इत्थंरूप इति निर्णेतुं शक्यश्चैतन्यसदृशत्वात्तस्य केवलस्य पुनरपि शुद्धान्तःकरणतया स्वात्मनोऽनुभवं प्रजापतिनोक्तमात्मलक्षणं च पुनः पुनः परामृश्य बुद्धिगतस्याल्पत्वदोषं पश्यन्त आहुः—अल्प इति। यद्यपि दृष्टोऽव्यवहार्यश्च तथाऽपि परिच्छिन्न आत्मा नः प्रकाशत इत्यर्थः। इत्युक्तः प्रजापतिः परमार्थात्मनोऽल्पत्वं निराचष्टे—नाल्प इति। अनल्पत्वेऽल्पस्यापि साक्षित्वं हेतुमाह—साक्षीति। साक्षित्वादेव विशेषान्तरमप्याशङ्क्यमानं निवर्तयति—अविशेष इति। तथाऽपि देहान्तरेऽप्यन्य एवंविध आत्माऽस्त्यतः सजातीयभेदवान्परिच्छिन्न एवेति चेन्न। यतो न देहान्तरस्थ आत्मैतद्देहस्थात्मनोऽन्य इत्याह—अनन्य इति। ननु सुखदुःखादिव्यवस्थया देहभेदेष्वात्मभेदोऽभ्युपगन्तव्य इति चेन्न। सुखदुःखादीनामात्मधर्मत्वाभावेन तद्भेदस्याऽऽत्मभेदसाधकत्वानुपपत्तेरित्याह—असुखदुःख इति। सर्वदेहेष्वात्मैकत्वानुसंधानादतिप्रसङ्ग इति चेन्नानुसंधानादेरप्यात्मधर्मत्वाभावादित्याह—अद्वय इति। तथाऽपि परमात्माऽन्य इति चेन्न यतः स्वत आत्मैव परमात्मेत्याह-परमात्मेति। ननु सर्वज्ञः परमात्माऽऽत्मा तु किंचिज्ज्ञोऽतः कथमयं परमात्मेति चेन्नायं दोषः। यत आत्माऽपि परमात्मवत्सर्वज्ञः सर्वेश्वरश्चेत्याह—सर्वज्ञ इति। सर्वबुद्धिसाक्षित्वं चिद्रूपत्वं चेश्वरस्य सार्वज्ञं तदस्यापि चिन्मात्ररूपस्याऽऽत्मनोऽविशिष्टमित्यर्थः। सर्वेश्वरत्वं च स्वसंनिधिमात्रेण सर्वप्रवर्तकत्वं तदपि समानमेव। अतोऽपरिच्छिन्नोऽयमात्मेत्याह—अनन्त इति। तथाऽपि साक्षिण आत्मनः साक्ष्यसद्भावाद्विजातीयभेदवत्त्वेन नाद्वितीये-

भिन्नोऽद्वयः सर्वदाऽसंवित्तिर्मायया नासंवित्तिः स्वप्रकाशे यूयमेव दृष्टः किमद्वयेन द्वितीयमेव न यूयमेव ब्रूह्येव भगवन्निति देवा ऊचुर्यूयमेव दृश्यते चेन्नाऽऽत्मज्ञा असङ्गो ह्ययमात्माऽतो यूयमेव स्वप्रकाशा इदं हि सत्संविन्मयत्वाद्यूयमेव नेति होचुर्हन्तासङ्गा वयमिति

श्वरात्मत्वमिति चेन्न साक्ष्यस्य कल्पितत्वादित्याह—अभिन्न इति । फलितमाह—अद्वय इति। यद्येवमद्वय ईश्वर एवायमात्मा किमिति तथा तदाऽयं नावभासत इति । अज्ञानबलादित्याह—सर्वदेति । तर्हि मायाज्ञानसंबन्ध एव दोष इत्याशङ्क्य न तत्संबन्धः परमार्थतः स्वप्रकाशत्वात्संभवत्यतो न दोष इत्याह—नासंवित्तिः स्वप्रकाश इति । किं तर्हीदं मायेत्यज्ञानमिति च सर्वदोच्यत इति । आत्मनि कल्पितत्वादात्मव्यतिरेकेणाज्ञानमायाया अभावादात्मैव तथोच्यत इत्याह—यूयमेवेति । पुनरपि पूर्ववत्प्रजापतिः पृच्छति—दृष्टः किमद्वयेनेति । किमद्वयरूपेणाऽऽत्मा दृष्टो भवद्भिः किं वा नेत्यर्थः । देवा ऊचुः—द्वितीयमेवेति । द्वयमेवास्माभिर्दृश्यते नाद्वयमित्यर्थः । आह प्रजापतिः—नेति । न द्वयं भवद्भिर्दृश्यत इत्यर्थः । तत्र हेतुमाह—यूयमेवेति । यतो यूयमेव वस्तु न द्वयं तस्माद्द्वयं द्रष्टुं न शक्यत इत्यर्थः । देवा ऊचुः—ब्रूह्येवेति । यद्येवमात्मैव वस्तु न द्वयं तर्हि तत्पुनरेव ब्रूहि भगवन्निति देवा ऊचुरित्यर्थः । आह प्रजापतिः—यूयमेवेति । न युष्मद्व्यतिरेकेण द्वयमस्ति परमार्थतो यूयमेव वस्त्वित्यर्थः । पुनरप्यस्माभिर्द्वयमेव दृश्यत इत्युक्तः प्रजापतिराह—दृश्यते चेदिति । दृश्यते चेद्द्वयं तर्हि यूयं नाऽऽत्मज्ञा इत्यर्थः । कथं द्वयदर्शनमात्रेण नाऽऽत्मज्ञत्वमिति तत्राऽऽह—असङ्ग इति । असङ्गस्य हि द्वितीयसंबन्धानुपपत्तेर्न द्वितीयदर्शनमस्ति यूयं चाऽऽत्मानं द्वितीयद्रष्टारं मन्यध्वेऽतो नाऽऽत्मज्ञा इत्यर्थः। कथं तर्ह्यात्मनो द्वैतद्रष्टृत्वप्रतिभास इत्याशङ्क्याऽऽत्मा स्वप्रकाशो द्वैतरूपेण प्रथते मायया तत आत्मप्रथैव द्वैतप्रथेति कल्प्यते मूढैरित्याह—अत इति । यत आत्माऽसङ्गत्वाद्द्वितीयद्रष्टा न भवत्यतो यूयमेव द्वैतरूपेण स्वप्रकाशा इत्यर्थः । द्वैतस्य स्वप्रकाशात्ममात्रत्वं साधयति—इदं हीत्यादिना । अर्थात्प्रजापतिनोक्तमात्मनः ससङ्गसत्संविद्रूपत्वं नेति होचुर्देवा इति नेति होचुरित्यस्यार्थः । तत्रासङ्गत्वं हेतुं प्रोचुरित्याह—हन्तासङ्गा वयमिति । यदि भवतोक्तं

१ ट. तथाऽन्तरयं । २ ञ. °स्त्विर्तीत्यं । ३ ञ. ट. °नोऽद्वैतत्वे द्वं° ।

कथं पश्यन्तीति हावाच न वय विद्म इति होचुस्ततो यूयमेव स्वप्रकाशा इति होवाच न च सत्संविन्मया एतौ हि पुरस्तात्सुविभातमव्यवहार्यमेवाद्वयं ज्ञातो ह्येवैष विज्ञातो विदिताविदितात्पर इति होचुः स होवाच तद्वा एतद्ब्रह्माद्वयं बृहत्त्वान्नित्यं शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दं

सत्यमसङ्गो ह्ययमात्मेति तर्ह्यसङ्गा वयमिति यस्मात्तस्मान्न ससङ्गसत्संविन्मयत्वमस्माकमिति होचुरित्यर्थः। कथमिति प्रजापतेः प्रश्नः। यद्यसङ्गा यूयं कथं तर्हि द्वैतं पश्यन्तीति होवाचेत्यर्थः। न वयं द्वैतदर्शनप्रकारं विद्म इति होचुर्देवाः। यत एवमसङ्गत्वादात्मनो द्वितीयदर्शनं न भवति ततस्तस्मान्मदुक्तप्रकारेण सत्संविद्रूपा यूयमेव द्वैतरूपेण स्वप्रकाशा इति होवाच प्रजापतिः। ननु ससङ्गयोः सत्संविदोः कथमसङ्गसंविद्रूपत्वमिति देवानां मतमाशङ्क्य न च युष्माकं ससङ्गसत्संविद्रूपत्वमित्याह प्रजापतिः—न च सत्संविन्मया इति। कथं तर्ह्यस्माकं सत्संविद्रूपत्वमुक्तं भवतेति देवानां मतमाशङ्क्य सत्संविच्छब्दलक्ष्यस्वरूपविवक्षयेत्यभिप्रेत्य सत्संविदात्मनोरव्यवहार्यात्ममात्रत्वमाह—एतौ हीत्यादिना। आह प्रजापतिः—ज्ञातो ह्येवैष इति। किं मयोक्तोऽव्यवहार्य आत्मा भवद्भिर्ज्ञातोऽथवा न ज्ञात इत्यर्थः। देवा ऊचुः—विज्ञात इति। कथं विज्ञात इति प्रजापतिना पृष्टा देवा ऊचुरित्याह—विदिताविदितात्पर इति होचुरिति। विदितात्परत्वमविषयत्वादविदितात्परत्वं स्वप्रकाशचिद्रूपत्वात्। एवं त्वंपदार्थशोधनं कारयित्वा तत्पदार्थशोधने प्रवर्तयन्स होवाच प्रजापतिः। किमुवाचेत्यत आह—तद्वा इति। तदिति कारणत्वेन परोक्षमेतदिति तदेव कार्ये प्रविष्टमपरोक्षमुक्तम्। अद्वयत्वे हेतुमाह—बृहत्त्वादिति। बृहतेर्धातोरद्वयत्व एव मुख्यार्थलाभादद्वयमेव ब्रह्मेत्यर्थः। एवं विशेष्यमद्वयमभिधायाऽऽत्मवद्ब्रह्मणोऽपि नित्यत्वादिकं विशेषणमाह—नित्यं शुद्धमित्यादिना। उक्तस्य विशेष्यस्य ब्रह्मणोऽद्वयत्वानुगुण्यसिद्धये स्ववाच्यार्थं परित्यज्यैकरसचिन्मात्रार्थतां प्राप्यैव नित्यादिपदानां ब्रह्मणि

---

१ ग. घ. ङ. छ. तो वै। २ ज. ट. ए। ऊ।

चिन्मात्रमात्मैवाव्यवहार्यं केनचन तदेतदात्मानमोमित्यपश्यन्तः पश्यत तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यमित्योंसत्यं तदेतत्पण्डिता एव पश्यन्त्येतद्ध्यशब्दमस्पर्शमरूपमरसमगन्धमवक्तव्यमनादातव्यमगन्तव्यमविसर्जयितव्यमनानन्दयितव्यममन्तव्यमबोद्धव्यमनहंकर्तव्यमचेतयितव्यमप्राणयितव्यमनपानयितव्यमव्यानयितव्यमनुदानयितव्यमसमानयितव्यमनिन्द्रियमविषयमकरणमलक्षणमसङ्गमगुणमविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कममायमप्यौपनिषदमेव सुविभातं

वृत्तिरित्याह—अव्यवहार्यं केनचनेति । केनचनापि पदेन मुख्यया वृत्त्याऽव्यवहार्यमित्यर्थः । एवं पदार्थद्वयं संशोध्य तयोरेकत्वं प्रणवेनाविषयतया प्रतिपत्तव्यमित्याह—तदेतदिति । तदेतद्यथोक्तं ब्रह्माऽऽत्मानं पश्यताऽऽत्मरूपेणैव पश्यतेत्यर्थः । अपश्यन्त इत्यविषयतयेत्यर्थः । उक्तमेकत्वं शपथकरणेन द्रढयति—तदेतत्सत्यमित्यादिना । किं तदिति तदाह—आत्मा ब्रह्मैव ब्रह्माऽऽत्मैवेति । इत्येतत्सत्यमित्यर्थः । यत उक्तमेकत्वं सत्यमतोऽत्र संशयो न कार्य इत्याह—अत्र ह्येवेति । उक्तमेकत्वं स्वानुभवेनापि द्रढयति—इत्योमिति । इतीत्युक्तस्यैक्यस्य परामर्शः । ओमित्यनुज्ञया स्वानुभवः प्रकटीकृतः । सत्यत्वमुपसंहरति—सत्यमिति । न्यायमीमांसासंस्कृतबुद्धीनां शब्दवृत्तिभेदविदामेवोक्तात्मैक्यप्रतिपत्तिर्भवतीत्याह—तदेतदिति । तत्र हेतुमाह—एतद्धीत्यादिना । अविषयमिति विषयसामान्यप्रतिषेधः । अलक्षणमित्यनुमानप्रतिषेधः । शब्दप्रवृत्तिनिमित्तषष्ठ्यादिप्रतिषेधोऽसङ्गमित्यादि । अतोऽव्यपदेश्यं शब्दैः । अमायमिति गुणसाम्यरूपमायाप्रतिषेधः । यद्यप्येवं सर्वविशेषरहितं तथाऽप्युपनिषद्भिरेव लक्षणया ज्ञातव्यमित्याह—अप्यौपनिषदमिति । उपनिषद्भिर्लक्षणया ज्ञाते स्पष्टतया ब्रह्मज्ञानं भवतीत्याह—सुविभातमिति । न चौपनिषदेनापि ज्ञानेनाऽऽत्मनि

१ ट कर्तव्य ।

सकृद्विभातं पुरतोऽस्मात्सर्वस्मात्सुविभा-
तमद्वयं पश्यताहं सः सोऽहमिति स
होवाच किमेष दृष्टोऽदृष्टो वेति दृष्टो विदि-
ताविदितात्पर इति होचुः क्वैषा कथमिति
होचुः किं तेन न किंचनेति होचुर्यूय-
माश्चर्यरूपा इति न चेत्याहोमित्यनुजानीध्वं

---

कश्चिदतिशयो जन्यते स्वप्रकाशनित्यचैतन्यरूपत्वादात्मन इत्याह—सकृद्विभातमिति। सर्वदा प्रकाशरूपमित्यर्थः। तत्र सर्वसाक्षित्वं हेतुमाह—पुरत इति। व्यतिहारेण चैकत्वं प्रतिपत्तव्यमित्याह—पश्यताहं सः सोऽहमिति। पूर्ववत्स होवाच प्रजापतिः—किमेष दृष्टोऽदृष्टो वेति। एवं पृष्टा देवा ऊचुः—दृष्ट इति। दृष्टश्चेत्किमात्मकोऽसाविति पृष्टा ऊचुः—विदिताविदितात्पर इति। पुनरपि साश्चर्यमूचुः—क्वैषा कथमिति। क्वैषा मायेदानीं गता कथं च पूर्वमासीत्स्वप्रकाशे चिदात्मनि। अहो आश्चर्यमेतदित्यर्थः। किं तेन मायावृत्तपरिज्ञानेन भवतां तदपरिज्ञाने किं भवतामस्ति काचिन्न्यूनतेत्यभिप्रायः प्रजापतिः पृच्छति—किं तेनेति। पृच्छन्तं देवा ऊचुः—न किंचनेति। न किंचन प्रयोजनमस्माकमस्ति मायावृत्तपरिज्ञानेन केवलमाश्चर्यवशात्पृष्टमस्माभिरित्यर्थः। यूयमेवाऽऽश्चर्यरूपा न माया यतो यूयमेवंविधाया मायायाः सत्ताप्रतिभासयोर्विचित्रार्थक्रियासामर्थ्यस्य च हेतव इत्यर्थो यूयमाश्चर्यरूपा इत्यस्य। यतः स्वरूपसत्तामात्रेण भवतामप्युक्तहेतुत्वं न विकृततयाऽतो न युष्माकमपि सर्वदैकत्वादाश्चर्यरूपत्वं वक्तुं शक्यतेऽदृष्टपूर्वं ह्यद्भुतमाश्चर्यमुच्यत इति न चेत्याहेत्यस्यार्थः। चशब्दादाश्चर्यरूपा इति पदमनुषज्यते। किं बहुना मायाचिन्तां परित्यज्य सर्वदोमित्यनुजानीध्वम्। सर्वसत्ताप्रतिभासानुज्ञातारं मदुक्तमात्मानमोमिति पूर्णवस्तुभासकेनानुज्ञानप्रणवेनानुजानीध्वं प्रतिपद्यध्वमित्यर्थः। न चात्र प्रतिपत्तृप्रतिपत्तव्यप्रतिपत्तिसाधनानां भेदोऽस्ति। यतो वक्ष्यति क्वैषाऽनुज्ञेत्येष एवाऽऽत्मेति होवाचेति। अत ओमित्यनुजानीध्वमिति विद्यया निवृत्ताविद्यानां स्वरूपावस्थानमेवोक्तम्। अनुजानीध्वमिति नियोगपरं तु वचनं विविदिषुप्रत्येवेति मन्तव्यमत उत्पन्नविद्यान्देवान्प्रत्यनुजानीध्वमिति प्रजापतेर्वचनं तत्परीक्षार्थमेव यथेदमुत्तरं वचनं परी-

ब्रूतैनमिति[1] ज्ञातोऽज्ञातश्चेति होचुर्न चैवमिति होचुर्ब्रूतैवैनमात्मसिद्धमिति होवाच पश्याम एव भगवन्न च वयं पश्यामो नैव वयं वक्तुं शक्नुमो नमस्तेऽस्तु भगवन्प्रसीदेति होचुर्न भेतव्यं पृच्छतेति होवाच केषाऽनुज्ञेत्येष एवाऽऽत्मेति होवाच ते होचु-

क्षार्थम् । ब्रूतैनमित्यादि । एनं मयोपदिष्टं भवद्भिर्ज्ञातमात्मानं भवद्भिर्विदितेनासाधारणेन रूपेण ब्रूतेत्यस्यार्थः । ते देवाः पूर्ववज्ज्ञातोऽज्ञातश्चेति होचुः । तर्हि ज्ञातत्वाज्ञातत्वधर्मवानात्मा भवद्भिर्ज्ञात इति प्रजापतिनोक्ता ज्ञाताज्ञातधर्माभावं पुनरप्याहुरिति न चैवमिति होचुरित्यस्यार्थः । यद्यपि ज्ञाताज्ञातत्वधर्मो नास्त्यात्मनस्तथाऽपि ब्रूतैवैनं यदस्यासाधारणरूपं तेन ब्रूतैव वक्तव्यमेव भवद्भिरित्यर्थो ब्रूतैवैनमित्यस्य । ननु न शक्यते वक्तुमस्माकमिति देवानां मतमाशङ्क्याऽऽह—आत्मसिद्धमिति । न हि न सिद्धं वक्तुं शक्यत इत्यभिप्रायः । पश्याम इत्यादि देवानां वचनम् । त्वत्प्रसादात्पश्याम एवाऽऽत्मानं भगवन्न च वयं केनचिद्धर्मेण विशिष्टं पश्यामोऽतो नैवेत्थंरूप इत्यात्मानं वक्तुं शक्नुमः। नमस्ते भगवन्सर्वज्ञ प्रसीदास्मत्परीक्षाप्रश्नाद्विरम्य प्रसन्नो भवेति होचुरित्यर्थः । यद्येवमात्मनो निर्विशेषत्वं निश्चितं भवद्भिस्तर्हि निवृत्तसंसारभया यूयमित्याह प्रजापतिः—न भेतव्यमिति। अतः परं निवृत्ताज्ञानत्वेन निवृत्तसर्वसंसारभया[2] यूयमित्यर्थः । यदि प्रष्टव्यशेषोऽस्ति भवतां तर्हि पृच्छतेति होवाच प्रजापतिः पूर्वोक्तानुज्ञाकर्तव्यतां परिहर्तुमिच्छन् । विद्यया कृतार्थानस्मान्प्रति किमिदं प्रजापतिनोक्तमोमित्यनुजानीध्वमितीति हृद्गतं शल्यमपनेतुं देवाः पप्रच्छुर्लब्धानुज्ञा इत्याह—केषाऽनुज्ञेति । अस्माकं त्वत्प्रसादात्कृतकृत्यानामपि कर्तव्यतया भगवतोक्ताऽनुज्ञोमित्यनुजानीध्वमिति सा किं कर्तव्यरूपाऽस्माकमुत नेत्यर्थः । न कर्तव्यरूपेति प्रजापतेरुत्तरम् । एष एवेति । न कर्तव्यरूपा किं त्वेष एव स्वयंप्रकाश आत्माऽनुज्ञा, स हि सर्वस्य सत्तां स्फूर्तिं चानुजानातीत्यनुज्ञारूप इत्यर्थः । अत ओमित्यनुजानीध्वमित्यस्यायमर्थः । ओमित्यनेनोंकारेण लक्ष्यमाणमात्मानमनुजानीध्वं प्रतिपद्यध्वं हे विविदिषव इति । एवं प्रजापतिना स्वाराज्येऽभिषिक्तास्ते देवा ऊचुः । किमुक्त-

१ ग घ. 'तैवैन' । २ ठ. 'त्तसं' ।

नमस्तुभ्यं वयं त इतीति ह प्रजापतिर्देवाननुशशासानुशशासेति तदेष श्लोकः—ओतमोतेन जानीयादनुज्ञातारमान्तरम् । अनुज्ञामद्वयं लब्ध्वा उपद्रष्टारमाव्रजेदित्युपद्रष्टारमाव्रजेदिति ॥ ९ ॥

ॐ भद्रं० १ स्वस्ति० २ ॐ शान्तिः ३

इत्यथर्ववेदान्तर्गतनृसिंहोत्तरतापनीये षष्ठोपनिषदि
नवमः खण्डः ॥ ९ ॥

समाप्तेयं नृसिंहोत्तरतापनीयोपनिषत् ॥

---

वन्त इत्याह—नमस्तुभ्यं वयं त इतीति । नमस्कारपूर्वकं स्वात्मानमर्पितवन्त इत्यर्थः । इतीत्यादि श्रुतेर्वचनम् । इत्येवमुक्तेन प्रकारेण प्रजापतिर्देवाननुशशासेति । द्विर्वचनमनुशासनसमाप्तिद्योतनार्थम् । इतिशब्द आख्यायिकासमाप्त्यर्थः । तुरीयानुशासनखण्डद्वयोक्तेऽर्थे श्लोकमवतारयति—तदेष इति । ओतमात्मानमोतेन प्रणवेन जानीयादुक्तप्रकारेणानुज्ञातारमात्मानमान्तरम् । अनुज्ञातृप्रणवेनोक्तप्रकारेण जानीयादित्यनुवर्तते । अनुज्ञामनुज्ञारूपमात्मानमित्यर्थः । तमनुज्ञाप्रणवेन जानीयादविकल्पमद्वयमात्मानमविकल्पप्रणवेन लब्ध्वा गुरुप्रसादतो ज्ञात्वेति तुरीयखण्डार्थ उक्तः । अनुशासनखण्डार्थमाह—उपद्रष्टारमाव्रजेदिति । ओतादियोगैः शुद्धान्तःकरणोऽनुशासनखण्डोक्तप्रकारेणानुशिष्ट उपद्रष्टृरूपेणावस्थितो भवेदित्यर्थः ॥ इति नवमः खण्डः ॥ ९ ॥

तापनीयरहस्यार्थदीपिका तिमिरापहा ॥
गुर्वनुग्रहलब्धैषा सतामस्तु सुखाप्तये ॥ १ ॥
सच्चिदानन्दसंपूर्णप्रत्यगेकरसात्मने ॥
तेजसे महते भूयान्नमः पुंसिंहरूपिणे ॥ २ ॥
येषां संस्मृतिमात्रेण तरन्ति भवसागरम् ॥
तान्नतोऽस्मि गुरून्भक्त्या धिया वाचा च कर्मणा ॥ ३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दपूज्यपादशिष्यश्रीमद्विद्यारण्यमुनीश्वरकृतौ श्रीनृसिंहोत्तरतापनीयषष्ठोपनिषद्दीपिका समाप्ता ॥

रु०आ० आ०पै०

२१० रा० पणशीकरोपाह्ववासुदेवशास्त्रिभिः संशोधिता। तस्या आद्यखण्डत्रितयात्मकः प्रथमो भागस्तस्य मूल्यम् ... ... ... ... ... ... ... ... ३ ८ ३ ६

२५-२. स्कन्दपुराणान्तर्गता सूतसंहिता श्रीमाधवाचार्यकृतटीकोपेता । तस्या अन्तिमखण्डपूर्वभागरूपो द्वितीयो विभागस्तस्य मूल्यम् ... ... ... ... ४ ४ ४ ०

२५-३. सूतसंहितान्तिमखण्डोत्तरभागरूपस्तृतीयो विभागस्तस्य मूल्यम् ... ३ १२ ३ ६

२६. पालकाप्यमुनिविरचितो हस्त्यायुर्वेदः, जयपुरमहाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा० दाधीचपण्डितशिवदत्तेन संशोधितः ... ... ७ ६ ६ ०

२७. कुसुमावल्याख्यटीकासंवलितो वृन्दमाधवः, करवीरपुरनिवासिभिः कृष्णशास्त्रितनूजैः 'हणमंतशास्त्रि पाध्ये' इत्येतैः संशोधितः ... ... ... ६ १२ ७ ०

२८. अष्टादशपुराणान्तर्गतं श्रीमद्व्यासप्रणीतं ब्रह्मपुराणम्, आनन्दाश्रमस्थपण्डितैः संशोधितम्— ... ... ... ... ... ... ... ... ६ ४ ६ ६

२९. श्रीनारायणशंकरानन्दविरचितदीपिकासमेतानामथर्वशिखाद्यानां हंसोपनिषदन्तानां द्वात्रिंशन्मितानामुपनिषदां समुच्चयस्तस्य मूल्यम् ... ... ... ६ १२ ६ ०

इह समुच्चये संगृहीतानामुपनिषदां वर्णानुक्रमतो नामान्यऽधो लिख्यन्ते—

| | | |
|---|---|---|
| १ अथर्वशिखोपनिषत् | १२ गोपालोत्तरतापनीयोपनिषत् | २३ ब्रह्मबिन्दूपनिषत् |
| २ अथर्वशिरउपनिषत् | १३ चूलिकोपनिषत् | २४ ब्रह्मविद्योपनिषत् |
| ३ अमृतनादोपनिषत् | १४ जाबालोपनिषत् | २५ मैत्र्युपनिषत् |
| ४ अमृतबिन्दूपनिषत् | १५ तेजबिन्दूपनिषत् | २६ योगतत्त्वोपनिषत् |
| ५ आत्मोपनिषत् | १६ ध्यानबिन्दूपनिषत् | २७ योगशिखोपनिषत् |
| ६ आरुणेय्युपनिषत् | १७ नादबिन्दूपनिषत् | २८ रामपूर्वतापनीयोपनिषत् |
| ७ कैवल्योपनिषत् | १८ नीलरुद्रोपनिषत् | २९ रामोत्तरतापनीयोपनिषत् |
| ८ कौषीतक्युपनिषत् | १९ परमहंसोपनिषत् | ३० संन्यासोपनिषत् |
| ९ क्षुरिकोपनिषत् | २० पिण्डोपनिषत् | ३१ सर्वोपनिषत् |
| १० गर्भोपनिषत् | २१ प्राणाग्निहोत्रोपनिषत् | ३२ हंसोपनिषत् |
| ११ गोपालपूर्वतापनीयोपनिषत् | २२ ब्रह्मोपनिषत् | |

३०. नृसिंहपूर्वोत्तरतापनीयोपनिषत्, श्रीमच्छंकराचार्यविरचितपूर्वतापनीयभाष्यविद्यारण्यप्रणीतोत्तरतापनीयदीपिकाभ्यां समेता। आनन्दाश्रमस्थपण्डितैः संशोधिता तस्या मूल्यम् ... ... ... ... ... ... ... ... ... ... ... १ १२

३१. श्रीनित्यानन्दमुनिविरचिता बृहदारण्यकोपनिषन्मिताक्षरा । आगाशे इत्युपाह्वबालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधिता ... ... ... ... २ १२

## सांप्रतं मुद्रणावस्थायां वर्तमानानि पुस्तकानि ।

धन्वन्तरीयनिघण्टू राजनिघण्टुसहितो भाषासप्तकगतपर्यायशब्दसमेतद्रव्यावलिवर्णानुक्रमकोशसहितः सपरिशिष्टश्च, वे० शा० रा० रा० वैद्योपनामकनारायणशास्त्रिभिः संशोधितः ।

श्रीशार्ङ्गदेवकृतः संगीतरत्नाकरश्चतुरकल्लिनाथविरचितटीकासमेतः ।

ऐतरेयब्राह्मणं श्रीमत्सायणाचार्यकृतभाष्योपेतम् ।

तथा नानाविधा नारायणशंकरानन्दविरचितदीपिकासमेता उपनिषदश्च ।

**एतत्स्थूलवर्णपङ्क्तेरधो यानि पुस्तकानि क्रमशः प्रदत्तानि सन्ति, तान्य-स्माभिः सांप्रतं संशोध्यन्ते। अतस्तानि पुस्तकान्येष्वन्यतमं वा यस्य कस्यापि सकाशे स्याच्चेत्, तर्हि तेनावश्यमस्मत्सकाशं प्रेषणीयम्। तेनास्मदुपरि तस्य महत्युपकृतिः स्यात्। वयमपि तस्य तत्पुस्तकं शोधनमुद्रणानन्तरं मुद्रितैकपुस्त-कसमेतं प्रेषयिष्यामः।**

अपरार्ककृतटीकासमेता याज्ञवल्क्यस्मृतिः।

तैत्तिरीयशाखिनां संहिताब्राह्मणारण्यकानि श्रीमत्सायणाचार्यकृतभाष्यसमेतानि।

श्रीमद्भगवद्गीता, आनन्दगिरिकृतटीकासंवलितश्रीमच्छांकरभाष्यसमेता माध्ववाल्लभरामानुजी-यपैशाचभाष्यैश्च सहिता।

यास्कमुनिविरचितं निरुक्तं दुर्गाचार्यप्रणीतभाष्योपेतम्।

विद्यारण्यकृता छान्दोग्योपनिषद्दीपिका।

( इत्येतानि पुस्तकानि सांप्रतं संशोध्यन्ते )

इयं ग्रन्थावलिर्न प्रातिमासिकी। अस्यां दूरदेशसंपादितैर्बहुभिः पुस्तकैर्ग्रन्थस्य सपाठान्तर-निर्देशं परिशोधनं भवति। यदा च द्वित्रमासैर्ग्रन्थः परिपूर्णो भवति तदैव सर्वेभ्यो ग्राहकेभ्यो दीयते। नियतग्राहकेभ्य आनन्दाश्रमस्थमुद्रितशतपृष्ठानां मूल्यं द्वादशाऽऽणका गृह्यन्ते। तेषां पुस्तकप्रे-षणार्थं धनव्ययो नैव भवति। अनियतग्राहकेभ्यस्तु शतपृष्ठानां मूल्यमेको रूपकः। पुस्तकप्रेषणा-र्थं धनं च गृह्यते। पुस्तकमूल्यग्रहणं पुस्तकप्रेषणात्पूर्वं पश्चाद्वा न, किंतु पुस्तकप्रापणसमय एव। नियतानियतग्राहकेभ्यः पुस्तकानि व्ह्यालुपेबलपोष्टमार्गेण प्रेष्यन्ते।

केवलदशोपनिषदां पुस्तकान्यपि सहैवास्माभिर्दीयन्ते, तेषां मूल्यं–सार्धैकविंशतिरूपकाः(२१॥) सन्ति, तथा दशोपनिषदः, अधिकरणमालासमेतशारीरशांकरभाष्यं चेति प्रस्थानद्वयमपि सहैव दीयते तस्य मूल्यं—त्रयस्त्रिंशद्रूपकाः(३०)। पुस्तकप्रेषणार्थं धनं तु ग्राहकसकाशादेव गृह्यते। पुस्तकानि व्ह्यालुपेबलपोष्टमार्गेण प्रेष्यन्ते। तस्य धनव्ययोऽपि ग्राहकसकाशादेव गृह्यते।

एतद्ग्रन्थावलीगतपुस्तकग्रहणेच्छुभिः पुण्यपत्तनस्थानन्दाश्रममुद्रणालये, अथवा मुंबापुर्यां 'ज्येष्ठा-राम मुकुंदजी' इत्येतेषां रामवाडींसंज्ञकचतुष्पथस्थितपुस्तकविक्रयणालये पत्रं प्रेषणीयम्। परं च केवलदशोपनिषत्पुस्तकग्रहणेच्छुभिः प्रस्थानद्वयग्रहणेच्छुभिश्च, पुण्यपत्तनस्थानन्दाश्रममुद्रणालय एव पत्रं प्रेषणीयम्। ग्राहकाणां पत्रप्रापणसमय एवाविलम्बेन पुस्तकक्रयणनियुक्तजनेभ्यः पुस्तकप्रे-षणं भविष्यति।

## पद्मपुराणम्।

अष्टादशपुराणान्तर्गतं श्रीमत्पद्मपुराणं कै० श्री० रावसाहेब मण्डलीकेत्युपना-मधारिभिः 'विश्वनाथ नारायण' इत्येतैर्महता परिश्रमेण बहुतराणि पुस्तकानि मेलयित्वा सपाठान्तरनिर्देशं संशोधितम्। एतदानन्दाश्रमसंस्कृतग्रन्थावलीगतं नैव रु०आ०रु०आ० किं तु स्वतन्त्रमेवास्माभिर्मुद्रापितं तस्य मूल्यम् ... ... ... ... ... २० ० १ ६